श्रीआगमोद्धारक ग्रन्थमालाया नवमं रत्नम्

ॐ नमो जिनाय

आगमोद्धारक-आचार्यप्रवरश्री-आनन्दसागरसूरीश्वरेभ्यो नमः

श्रीवादिदेवसूरिसन्तानीयश्रीज्ञानकलशसूरिनिर्मितः-

# सन्देहसमुच्चयः॥



संशोधकः गच्छाधिपति-

आचार्य-

श्रीमन्माणिक्यसागरसूरिः।

संवत्-
२०१५ श्रावणबहुलाष्टमी प्रति ५००-

मूल्यम्
०-७५ नये पैसा

प्रकाशक :
रमणलाल जयचंद शाह
कपडवंज
( जि. खेडा )

मुद्रकः-
सहकारी छापखानुं, रावपुरा, वडोदरा.
मंगळभाई पेरीभाई पटेल
मेनेजर.

## प्राप्तिस्थानो—

१ श्रीजैनानन्दपुस्तकालय
सुरत गोपीपरा

२ श्रीआगमोद्धारकग्रन्थमाला
ठे. मीठाभाइकल्याणचन्दनी पेढी
कपडवंज ( जी. खेडा )

३ श्रीसरस्वतीपुस्तकभण्डार
अमदावाद ठे. रतनपोल हाथीखाना

## साभार स्वीकार

वडोदरानिवासी स्व. शेठशान्तिलालरंगीलदासना पुण्यस्मरणार्थे तेओश्रीना पिताश्रीधर्मनिष्ठश्री. रंगीलदास छगनलाले रु १०१. ग्रन्थमालाने भेट अर्पण कर्या छे.

—प्रकाशक

## किञ्चिद् वक्तव्यम्

अस्मिन् श्रीमज्जैनशासनमहोदधौ प्रचुराणि ग्रन्थरत्नानि वर्तन्ते । तन्मध्यात् इदं सन्देहसमुच्चयभिधानं ग्रन्थरत्नं विदुषां करसरोरुहे समर्प्यते । अस्य ग्रन्थस्य रचयितारः वृद्धगच्छीयवादिदेवसूरीश्वरपरम्परायां श्रीजयमङ्गलसूरीश्वर-तच्छिष्यश्री भद्रचन्द्रसूरीश्वर-तत्पट्टधरश्रीधर्मघोषसूरीश्वरच्छिष्याः श्रीधर्मतिलकसूरीश्वराणां गुरुभ्रातरश्च श्रीज्ञानकलशसूरय एव, इत्येतत्प्रशस्त्यवलोकनात् स्पष्टमेवेति । अत्र वेदस्मृतिपुराणादिषु परस्परविरोधभासां बहुव्याघातरूपाणां असम्भवितानां बहूनां वचसां सन्ति । अत्र ग्रन्थरत्ने दृष्टिदोषादिना कचनाशुद्धिः सञ्जाता भवेत् तत्र शोधनीयं विज्ञैरिति प्रार्थयते

वडवा, श्रावणबहुलाष्टमी —चन्दनसागरगणिः

---

## प्रकाशकीय-निवेदन

पू०पू० गच्छाधिपति आ० श्रीमाणिक्यसागरसूरीश्वरजी महाराज आदिठाणां वि. सं. २०१० ना वर्षे वर्धमाननगरमां मीठाभाइ-गुलालचंदना उपाश्रये चातुर्मास बीराज्या हता आ अवसरे तेओश्रीना पवित्र आशीर्वादे आगमोद्धारकग्रन्थमालानी स्थापना थयेली हती. आ ग्रन्थमालाए त्यारबाद प्रकाशनोनी प्रगति ठीक ठीक करी छे. सदर 'सन्देहसमुच्चयः' नी प्रेसकोपी पू० पू० स्व गुरुदेव आगमोद्धारक आचार्यप्रवरश्री— आनन्दसागरसूरीश्वरजीए करावेली श्रीजैनानन्द-पुस्तकालय (सुरत) मां हती तेने जुदा जुदा भण्डारोनी हस्तपोथीओ साथे मेळवी तेनी फरीथी प्रेसकोपी पू० गणिवर्यश्रीचन्दनसागरजी

महाराजे करी अने तेनुं संशोधनपणानुं कार्य प० पू० गच्छाधिपति आ
श्री. माणिक्यसागरसूरिजीनी पुनीत दृष्टि नीचे थतां मूको आदिम
पण तेओए सारो सहकार आप्यो छे ते माटे हुं तेओश्रीने
ऋणी छुं, तेओश्रीनी पुण्यकृपाए आ 'सन्देहसमुच्चय' नामन
ग्रन्थने आगमोद्धारकग्रन्थमालाना नवमा रत्न तरीके प्रगट करतां मने

अतिहर्ष थयो छे.

रमणलाल जयचंद शाह

## शुद्धिपत्रकम्

| अशुद्धम् | पृष्ठ | पं. | शुद्धम् |
|---|---|---|---|
| ऐ० | १ | १६-२३ | ॐ० |
| कुम्मभूः | २ | ७ | कुम्भभूः |
| कोशिकः | २ | १३ | कौशिकः |
| मां धातृ | ३ | ७ | मांधातृ |
| ०दाम्न्यो | ४ | ६ | ०दान्यो |
| रपो० | ८ | १ | रेपो० |
| शेषां | २९ | ४ | शेषाः |
| दिवां | २९ | १४ | दिवा |
| इत्याधिकं | ३२ | २६ | इत्यधिकं |
| माता० | ४० | ९ | मरा० |
| ०वहि० | ४० | १९ | ०वहि० |

ॐ नमो जिनाय ॥

॥ आगमोद्धारक–आचार्यप्रवर–श्री–आनन्दसागरसूरीश्वरेभ्यो नमः ॥

श्रीवादिदेवसूरिसन्तानीय–श्रीज्ञानकलशसूरिनिर्मितः

# सन्देहसमुच्चयः।

सद्भूतभावप्रविकाशनैक–भानुप्रभं वीरजिनं प्रणम्य ।

सम्मील्य सन्देहपदानि वक्ष्ये, कियन्त्यपि प्राकृतबोधहेतोः ॥१॥

कोपे सति स्यात्कुत एव मुक्तिः?, कामेऽथवा तत्प्रतिबन्ध एव ।

रागेऽपि च स्यान्न फले विशेषस्तस्मान्न चैते हृदयेऽत्र वार्याः ॥२॥

ब्रह्मापि पुत्रीमवशंवदात्मा, वृद्धोऽपि किं स्वां चकमे न मोहात् ? ।

पीनस्तनीभिः सह गोपिकाभिर्लक्ष्मीपतिः सोऽपि चिरं चिखेल ॥३॥

स नीलकण्ठस्त्रिपुरस्य दाहं, कोपाद्वितेने गगनस्थितस्य ।

पूषान्धकादींश्च मृधे जघान, मुक्तिप्रदः स्यात्कतमस्त्वमीषु ?॥४॥

तपस्विशापात्र कथं विनष्टा, पूर्द्वारिका यादवमण्डिताऽपि ? ।

हरिर्भ्रमन् काननमध्यदेशे, बाणप्रहारान्न कथं विनष्टः? ॥५॥

तथा न गाधेस्तनयः सहस्रं, संवत्सराणां च ततान युद्धम् ।

समं वशिष्ठेन ततश्च कोपान्ममाथ तत्पुत्रशतं जवेन ॥६॥

निमन्त्रितः पारणकाय हर्षात्, कुशारणिः प्राग्मधुसूदनेन ।

सरुक्मिणीकं रथयुग्मरूपं, प्रतोदनात् तं स चकार काणम् ॥७॥

किं नारदः कोपवशान्न विष्णुं, चकार नारीं जनहास्यहेतुम् ?

तपस्विभिर्लिङ्गनिपातनार्तिक, त्रिगोपिनो न प्रथितस्त्रिनेत्रः ? ॥८॥

उक्तं च—

भार्याऽप्यहिल्या किल गौतमस्य, क्रुद्धस्य शापेन शिला बभूव ।

नीतो वशिष्ठेन रुषाभिशप्त–श्चाण्डालतां भूमिपतिस्त्रिशङ्कुः ॥२॥

पाण्डुः प्रियाकण्ठविलग्नबाहुर्ययौ स्तनन्यस्तननुर्यदन्तम् ।
दृग्वः परीक्षिः फणिदृष्टदेहोर्यन् तपस्विकोपस्य विजृम्भितं तत् ॥१०॥
किं गौतमः कोपवशात् सुरेशं, पूर्वं भगव्याप्ततनुं न चक्रे ? ।
दुर्वाससः शापवशाच्च देवी, सरस्वती मानुषतामवाप ? ॥११॥
मुनीन्द्रशापाच्च कथं धरित्री, जगाल कर्णस्य रथं समाजे ? ।
तस्यैव शस्त्राणि न आपदान्यः, कोपारणः किं विफलीचकार ? ॥१२॥
न कुम्भभूः किं कुपितः समुद्रं, गाहैस्पेतं जठरं निनाय ? ।
पुनः स एव प्रवितीर्य शापं, भूपं न सर्पं नहुषं च चक्रे ? । ॥१३॥
न स्त्री दुष्यति जारेण, स्मृतिवाक्यं स्मरन्नपि ।
जमदग्निः प्रियाशीर्षं, सुतेनाच्छेदयत् क्रुधा ॥१४॥
चकर्त्त शीर्षं स्वकरेण मातुर्निःक्षत्रियां यः पृथिवीं चकार ।
स्नाति स्म तेषां रुधिरैस्त्रिकालं, सोऽप्युच्यतेऽशैर्मधुसूदनांशः ॥१५॥
न कौशिकः किं शरदां सहस्रं, रागान्वितेवे किल मेनकां ताम् ?
तथा जरत्कारुमुनिर्न वृद्ध–भावेऽपि कामेन विडम्बितः प्राक् ? ॥१६॥
शुक्रस्य शापान्नृपतिर्ययातिर्लेभे जरां तां तनये निनाय ।
वर्षान् सहस्रं विषयोपभोग–माधाय तृप्तः पुनराददे स्वाम् ॥१७॥
दत्ता सती याति यदन्यदेहं, स्थानं समभ्येति पुनर्गृहीता ।
गतागतं चेत्कुरुते तदित्थं, सन्दर्शयेतां कौतुकमाशु किञ्चित् ॥१८॥
द्रोणो रणे पाण्डवकौरवाणां, द्विजोऽपि जज्ञे न यमावतारः ?
यत् सौप्तिके पर्वणि तस्य शाठः, सुतोऽपि चक्रे वचनातिगं तत् ॥१९॥
परासरः कामवशाच्च कन्यां, दिवा सिषेवे यमुनाजलस्थः ? ।
व्यासस्तु बन्धोर्दयिताद्वयस्य, वैधव्यविध्वंसकरो न जज्ञे ? ॥२०॥
कोपेन कश्चिन्मदनेन कश्चिद्, रागेण कश्चिच्च परीतदेहः ।
विहाय सर्वांश्च विमुक्तिहेतोः, श्रीवीतरागं शरणं विधेहि ॥२१॥
वेदैः पुराणैः स्मृतिभिश्च येषां, मनांसि नित्यं परिवर्तितानि ।
पृच्छामि सन्देहपदानि तेषां, समीपतः शास्त्रविरोधमाञ्जि ॥२२॥

यत्नाश्चनेश्वरः किला—स्मनहेतोर्द्विममन्त्रितं जलम् ।
तृपितस्तु पपौ ततः परं, जठरं वृद्धिमियाय भुमुजः ॥२३॥
मिमिलुस्तनयस्य निर्गमे, सुरकोटयो बहवः समाकुलाः ।
उदरं स विदार्य निर्गतः, सुरदास्त्वा जनकश्च जीवितः ॥२४॥
परिपालयिता स्तनन्धयं, कतमस्त्विति सुरेषु कल्पनाम् ।
त्रिदशाधिपतिस्ततो जगौ, ननु मां धास्यति कोऽत्र सम्भ्रमः ॥२५॥
परिवृद्धिमुपागतः क्रमात्, स तु मां धातृ इति प्रथां गतः ।
इदमप्यभिधीयते शठैः—स्वरैः प्रीतिपरैश्च मन्यते ॥२६॥
न स्थूलमुदरं जज्ञे, निर्धेरन्तःस्थितैर्हरेः ।
एकेन बलिना स्थूलं, कथं जातं विमृश्यताम् ? ॥२७॥
पुत्रिका अस्थवस्थ्याः स्युः, स्वतुना बालकैरपि ।
हरिस्तु नीतवानन्तं, कथं स्वाङ्गे धृतं बलिम् ? ॥२८॥
नरकादतिरिच्यतेतरां, जननीगर्भगतस्य वेदना ।
स हरिः किल तां च यातना—मवतारैर्दशभिर्विपोऽहगात् ॥२९॥
अथ कृष्णभवे किरीटिनो, रथिनः सारथितामुपेत्य च ।
वनखाण्डवदाहवासरे, स युवा पापचयस्य भागभूत् ॥३०॥
धृतराष्ट्रजपाण्डुजन्मनो, रणकर्मण्यखिलेऽपि साक्षिणः ।
शबरस्य करोपपातिनः, सुगतिं जल्पत केन हेतुना ? ॥३१॥
प्रविधाय विधिं जनार्दने, सुगतिं कथं निनाय दुर्गतेः ? ।
तदिदं त्रिदिवाङ्गनोऽर्गलां, सुरभेः पुच्छमृतेऽनात्कथम् ॥३२॥

यतस्तैत्रावसाने उक्तम्—

चतुर्दशकोटिशत—वासराणां परेऽहनि ।
मया रामभवे पाप—मकारि सुमहत् पुनः ॥३३॥
अकृतस्यागमो नास्ति, कृतनाशो न विद्यते ।
(अ) युध्यमानो हतो वाली, तस्येदं कर्मणः फलम् ॥३४॥

यदि जैनवचोऽनुसारिभिः, कुगतिस्तस्य विचार्य कथ्यते ।
तदहो! द्विजपुङ्गवाः कथं, विचरन्ते लकुटैः करस्थितैः? ॥३५॥

माण्डव्यं प्रति यमस्य वाक्यम्—

पतंगिकायाः पुच्छे तु, त्वयेषीका प्रवेशिता ।
कर्म्मणस्तस्य ते प्राप्तं, फलमेतत्तपोधन! ॥३६॥

अथ-स जामदग्न्यो न हरेर्विभागो, भागः कथं दाशरथिः स एव?।
उभौ च चेत्तर्हि कथं स्वयं स, स्वस्यैव जेता वद कोऽत्र हेतुः? ॥३७॥

अपुत्रस्य गतिर्नास्ति, स्वर्गो नैव च नैव च ।
तस्मात् पुत्रमुखं दृष्ट्वा, पश्चाद्धर्मं समाचरेत् ॥३८॥

निःसन्ततेर्यत्सुगतेर्निषेधं, पौराणिकाः प्राहुरदोऽप्यसत्यम् ।
भीष्म. कुमारः शुकनारदाद्याः, स्वर्गं गता वा नरकं प्रयाताः? ॥३९॥

अत्रैव भारते—

अनेकानि सहस्राणि, कुमारब्रह्मचारिणाम् ।
दिवं गतानि राजेन्द्र!, अकृत्वा कुलसन्ततिम् ॥४०॥

असूत भारती देवी, सुतं सारस्वताभिधम् ।
आबाल्यब्रह्मचार्येव, वनवासं जगाम सः ॥४१॥

मदालसायास्तनया, बालत्वेऽपि वनं गताः ।
स्वर्गश्च समभूत्तेषां, क्वेति प्रतिपाद्यताम्? ॥४२॥

अथ-स्वर्गकामो यजेताग्नि-मित्यसत्यं वचो श्रुतम् ।
'न कर्मणा न प्रजये' त्यादि वाक्यं न किं श्रुतम्? ॥४३॥

'न कर्म्मणा न प्रजया न धनेन योगेनैकेनामृतत्वमानशुः'।

विश्वामित्रकृता सृष्टिश्छागादीनां निगद्यते ।
यद्यत्यमित्यजैर्वाक्यं, वेदमध्ये कथं स्थितम्? ॥४४॥

अथ-श्रूयते हि पुरा कल्पे, नृणां व्रीहिमयः पशुः ।
येनायजंश्च यज्वानः, पशुकर्मपरायणाः ॥४५॥

ऋषिभिः संशयं पृष्टो, वसुश्चेदिपतिः पुरा ।
अभक्ष्यमिति मांसं च, प्राह भक्ष्यमिति प्रभो! ॥४६॥

आकाशान्मेदिनीं प्राप्तस्ततोऽसौ मेदिनीपतिः ।
एवमेव पुनश्चोक्त्वा, विवेश धरणीतलम् ॥४७॥

अथ महाभारते शान्तिपर्वणि पाण्डवदाहावसरे—

प्राग् विप्रो मन्दपालस्त्रिदिवमुपगतस्तत्र निष्पुत्र इत्या
पायं नैवाल्पमायं फलमुरुतपसां बाल्यतो ब्रह्मचारी ।
तत्कृत्वा शार्ङ्गरूपं द्रुतपुनरुक्तये शार्ङ्गिकायां स्म सुते,
यत्पुत्राणां चतुष्कं प्रणतिभिरमुनाऽमोचि वह्नेस्ततस्तत् ॥४८॥
ते तक्षकसुतोऽश्वसेनः मयश्च सतमः कोपि न ।

महाभारते शान्तिपर्वणि—

रंतिदेवनरेन्द्रेण, गोमेधा बहवः कृताः ।
तेषां च रुधिरैर्घोरा, प्रावर्त्तत महानदी ॥४९॥
चर्मण्वतीति विख्याता, सा जनैःतीर्थमुत्तमम् ।
तस्याः स्नानेन शुद्धिः स्यात्, मोहस्य ललितं हि तत् ॥५०॥

द्विधा ऋषयः— एके निवृत्तमांसा एकेऽनिवृत्तमांसाः । ये निवृत्तमांसास्तेषां दधिमधुमिश्रो मधुपर्कः, ये त्वनिवृत्तमांसास्तेषामभ्यागताय श्रोत्रियाय महोक्षं वा महाजं वा वत्सतरीं वा पचन्तिगृहमेधिनः॥ इतिवेदे ।

महोक्षं वा महाजं वा, पच्यते वत्सतर्यपि ।
येषां हेतोः क्षत्रियास्ते, ब्राह्मणा वा निगद्यताम् ? ॥५१॥
क्षत्रियाश्चेन्कृतं तेषां, वार्त्ताभिः पापकारिणाम् ।
ब्राह्मणा यदि तत्तेषां, म्लेच्छानां च किमन्तरम् ॥५२॥

नैषधे कलिसर्गे—

अधावत् क्वापि गां वीक्ष्य, हन्यमानामयं मुदा ।
अतिथिभ्यश्च तां ज्ञात्वा, मन्दं मन्दो न्यवर्त्तत ॥५३॥
गोमेधो नरमेधश्च, अक्षता च कमण्डलुः ।
कलौ पञ्च न विद्यन्ते, देवरः पुत्रकाम्यया ॥५४॥

कन्दमूलफलाहारा, जटिलाः श्वापदोपमाः ।
मांसेन गौरवं तेषां, मौद्गकाद्यैर्न किं भवेत् ? ॥५५॥
यूपं कृत्वा पशून् हत्वा, कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गे, नरके केन गम्यते ? ॥५६॥
सर्वेषामेव देवानां, वक्त्रं वैश्वानरो मतः ।
सर्वं पूतमपूतं वा, तेनात्तं तन्मुखे विशेत् ॥५७॥
आहोस्विन्मन्त्रपूतं यत्, तत्तेषां वदनं विशेत् ? ।
मन्त्रहीनं तु यद्भुक्तं, तत्किं कर्णादिके पुनः ?॥ ५८॥
अत्याहाराद्रोगवृद्धि-रिति सत्यापितं वचः ।
घृतस्यात्यशनाद्वह्नि, चक्रिः कुष्ठसङ्कुलम् ॥५९॥
उक्तं च-अग्नौ आस्याहुतिः सम्य-गादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टि-र्वृष्टेरन्नं ततः प्रजाः ॥६०॥
एकत्र वृष्टिरिन्द्राद्यापरत्र नृपतेः पुनः ।
मेघैः समुद्रात् सूर्याद्य, कुतोऽपि स्यात् न बुध्यते ॥६१॥
वह्निरेकान्ततः पूतोऽपवित्रो वेति कथ्यताम् ।
पवित्रोऽन्त्यजगेहात्तद्, द्विजैरादीयते न किम् ? ॥६२॥
अपूतश्चेत् कथं तस्माद्वस्तूनां शुद्धिरुच्यते ?
औपाधिके च पावित्र्ये, माहात्म्यं ज्वलनस्य किम् ? ॥६३॥
अथासौ विप्रगेहस्थः, पवित्रो नेतरः पुनः ।
धूमे दाहे न कीलाया-मन्तरं तर्हि दर्श्यताम् ॥६४॥
विप्रगेहस्थितो नित्यं, तर्प्यते सर्ववस्तुभिः ।
सुवर्णपुरुषस्तस्मात्किं सत्वात्कोपलक्ष्यते ॥६५॥
केवलं दृश्यते भस्म, द्वयोरपि हि तत्समम् ।
तत् कथं वणिजां स्पर्शाद्विप्राः कोधमवाप्नुयुः ? ॥६६॥
गृहीत्वा शूद्रधेनुं च, तां पृथक् कुर्वतो द्विजाः ।
श्वपचा इव दृश्यन्तेऽधिका वा सर्वभक्षणात् ॥६७॥

सुरापानादेव मूर्द्धन्यं, कलिं मन्यामहे वयम् ।
धेन्वादीनां वधो यत्र, निषिद्धो द्विजहस्ततः ॥६८॥
नश्यन्तोऽपि स्रवन्तोऽपि, बलिभिर्दुर्बलाः पुनः ।
हन्यन्ते पशवः पापैः, स्वादकैर्धर्म्मकैतवात् ॥६९॥
भारते–एकतः क्रतवः सर्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य, प्राणिनः प्राणरक्षणम् ॥७०॥
इन्द्रियाणि पशून् कृत्वा, वेदीं कृत्वा तपोमयीम् ।
अहिंसामाहुतिं कृत्वा, आत्मयज्ञं यजाम्यहम् ॥७१॥
कषायपशुभिर्दुष्टैर्धर्म्मकामार्थबाधकैः ।
शममन्त्रहुतैर्यज्ञं, विधेहि विहितं बुधैः ॥७२॥
ध्यानाग्नौ जीवकुण्डस्थे, दममारुतदीपिते ।
असत्कर्मसमित्क्षेपैः–रग्निहोत्रं कुरूत्तमम् ॥७३॥

व्यासशिक्षा भारतादौ—

श्रूयतां धर्म्मसर्वस्वं, श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि, परेषां न समाचरेत् ॥७४॥
श्रूयतां धर्म्मसर्वस्वं, भारतादाविदं वचः ।
षट्शतानि नियुज्यन्ते; इति मध्ये व्यवस्थितम् ॥७५॥
षट्शतानि नियुज्यन्ते, पशूनां मध्यमेऽहनि ।
अधर्मेवस्य वचनाच्यूनानि पशुभिस्त्रिभिः ॥७६॥
प्रान्ते तु शान्तिकं पर्व, सर्वहिंसानिवर्जकम् ।
त्रयाणां कतमद्धर्म्यं, सम्यग् ज्ञात्वा निगद्यताम् ? ॥७७॥
आरोग्यं भास्करादिच्छेदित्यसत्यं वचो ध्रुवम् ।
स्वयं गलितपादोऽसौ, कथं कष्टापहो हहा ! ॥७८॥
आकाशकुसुमप्रायं, यन्मुक्तिश्च जनार्दनात् ।
महद्योऽस्वार्थ्य, कर्तोऽस्य ग्रस्यात्र ॥७९॥

हुताशनाद् वनप्राप्ति-रयोक्तिर्न घटामटेत् ।
भस्मसात् कुरुते सर्व -मेतत्सत्यं तु नापरम् ॥८०॥
ईश्वराज्ज्ञानमन्विच्छेद्, शुक्तमुक्तं न चागमे ।
स्वयमज्ञानतः पापं; ब्रह्महत्यादि योऽकरोत् ॥८१॥
प्राकृतं हि पिशाचानां, भाषाऽन्यैरभिधीयते ।
कृष्णाद्यैरपि बाल्यत्वे, ह्येतदुक्तं न संस्कृतम् ॥८२॥
ऋषिर्वैराग्यवान् पूर्वं, गागर्लिर्नाम विश्रुतः ।
प्रविश्य वंशनालान्तस्तपस्तेपे सुदुस्तपम् ॥८३॥
एकदा सरसि स्नान्ती-मुर्वशीं वीक्ष्य देवताम् ।
वीर्यं मुमोच सच्छिद्र-वंशान्तस्तत्र कीचकाः ॥८४॥
षष्ठोत्तरं शतं जाताः, शालास्ते मत्स्यभूभुजः ।
पुराणोक्तिरियं सत्या, मृषा वा सद्भिरूह्यताम् ॥८५॥
आयुर्वेदः कथं सत्योऽथवा पौराणिकोक्तयः ?
आद्ये युग्मात् समुत्पत्तिर्द्वितीये तु यतस्ततः ॥८६॥
वालुकातो वालिखिल्यः, कौशिकः कुशस्तरात् ।
वंशाच्च कीचकशतं, द्रोणः कलशतो मतः ॥८७॥
अगस्त्योऽगस्तिपुष्पाच्च, कुम्भतः शरतो गुहः ।
रामपुत्रः कुशस्तोमाद्, मलाद् गणपतिः पुनः ॥८८॥
गौतमः शरगुल्माच्च, कठिन्याः कठिनो मतः ।
अङ्गुष्ठाच्च मरीचिस्तु, काश्यपः कांस्य (काश) पात्रतः ॥८९॥
हरिण्युदरतः कश्चित्, कश्चित्तित्तिरकोदरात् ।
उलूक्याश्चटिकायाश्च, मत्सिकायास्तथोदरात् ॥९०॥
कोऽपि कर्णात् कोऽपि नेत्रा-दङ्गुष्ठादञ्जलेः पुनः ।
वह्नेर्जलाद्भुमाद्वापि, जात एवं निगद्यते ॥९१॥
आयुर्वेदे तु नवभि-र्मासैः सार्धैर्जनिर्भवेत् ।
क्रमाच्चङ्क्रमणं वाक्य-रदाद्युत्पद्यते सुखे ॥९२॥

एवं मलद्वये दृष्टे, मोहश्चित्ते प्रमायते ।
युक्तायुक्तं विमृश्योर्च्च–रेकत्र स्थीयतां स्थिरैः ॥९३॥
जलात्सञ्जायते शुद्धि–र्ज्वलनाच्च विशेषतः ।
उभयोर्योगतश्चोष्णं, जलं पूतं कथं नहि ? ॥९४॥

यत उक्तं गीतायाम्—

आपः स्वभावतो मेध्याः, किं पुनर्वह्नितापिताः ।
तस्मात् सन्तः प्रशंसन्ति, शुद्धिरुष्णेन वारिणा ॥९५॥
जलाधारे चर्मचये, मलं क्षिप्तं विशुद्धये ।
स एव तु कथं शुद्धः, सम्यग्रीत्या विचिन्त्यताम् ॥९६॥
मलं जलचरैर्जुष्टं, तथैव स्थलचारिभिः ।
दृष्ट्वा मत्स्यघ्नतोऽपूतं, पवित्रं मन्यते कथम् ? ॥९७॥
जलाधारे पयोऽदुष्टं, वत्सपीतं तथा पयः ।
भृङ्गाघ्रातं तथा पद्मं, नैवापूतं क्वचिद्भवेत् ॥९८॥
वहमानं करापातं, घटीयन्त्रेण ताडितम् ।
नवभाजनमध्यं तु, पवित्रं नीरमुच्यते ॥९९॥
जलाधारे पयोऽदुष्टमिति वाक्यबलाद्बहो ! ।
विदध्वं स्वेच्छया स्नानं, कुरुध्वं शौचधावनम् ॥१००॥
सुसंसर्गाद्भवेत् पूतं, कुसंसर्गादपावनम् ।
पानीयमिति तत्त्वकत्वाऽऽग्रहं श्रृणुत मद्वचः ॥१०१॥
ईशसम्पर्कतः शुद्धां, कश्मलामिति मस्मतः ।
कथमेकान्ततः पूतां, गङ्गां वदत दुर्धियः ॥१०२॥
त्रयीतेजोमयो भानुः, समस्तं तत्करैः शुचि ।
जल्पन्तोऽप्येवमाहारं, रात्रौ कुर्वन्ति दुर्धियः ॥१०३॥

भारते उक्तम्—

जलानि यानि जाह्नव्याः, सर्वपापहराणि वै ।
तान्येव रुधिराण्याहु–रस्तं याते दिवाकरे ॥१०४॥

ये रात्रौ सर्वदाऽऽहारं, वर्जयन्ति सुमेधसः ।
तेषां पक्षोपवासस्य, फलं मासेन जायते ॥१०५॥

नत्रैव—मद्यमांसाशनं रात्रौ, भोजनं कन्दभक्षणम् ।
ये कुर्वन्ति वृथा तेषां, तीर्थयात्रा जपस्तपः ॥१०६॥

वृथा एकादशी प्रोक्ता, वृथा जागरणं हरेः ।
वृथा च पौष्करी यात्रा, कृत्स्नं चान्द्रायणं वृथा ॥१०७॥

चतुर्मासे तु सम्प्राप्ते, रात्रिभोज्यं करोति यः ।
तस्य शुद्धिर्न विद्येत, चान्द्रायणशतैरपि ॥१०८॥

श्रीहेमाचार्यैरप्युक्तम्—

पयोदपटलच्छन्ने, नाश्नन्ति रविमण्डले ।
अस्तं गते तु भुञ्जाना, अहो ! भानोः सुसेवकाः॥१०९॥

स्नानाद्यं वर्ज्यते यत्र, तथा वर्ज्यं तर्पणम् ।
देवपूजार्चना दानं, भुज्यते तत्र किं निशि ? ॥११०॥

दिवसस्य द्विजातीनां, सार्द्धे यामद्वये गते ।
भोजनं कथ्यते शास्त्रे, न तदूर्ध्वं न मध्यतः ॥१११॥

एकस्मिँश्च, सहस्रांशौ, द्विवेलं भुज्यते कथम् ? ।
साडर्केरिति जल्पद्भि-र्यामिनीभोजनं कृतम् ॥११२॥

चन्द्रमा मनसो जात, उताब्धेर्वाऽत्रिनेत्रतः ।
वयं तत्त्वमजानाना-, पृच्छामः कथ्यतां कुतः ? ॥११३॥

वेदोक्त मतिनारेण, परिणीता सरस्वती ।
'मतिनारः सारस्वतीमुपयेमे' पुराणे च पुनर्देवी, विधृता च दधीचिना॥११

वासवदत्तायामादावेव प्रबन्धोऽस्ति—

भुञ्जतस्तस्य योगांश्च, जातः सारस्वतः सुतः ।
तत्पितुर्भ्रातृतनयो, वत्सो नाम महामुनिः ॥११५॥

ग्रन्थेषु पौरुषेयेषु, पुरुषोत्तमवल्लभा ।
अनश्रुत्या कुमारी च, किं तथ्यमिह दृश्यताम् ?॥११६॥

तथा नैषधे एकादशे स्वर्गे—
देवी पवित्रितचतुर्भुजवामभागा, वागाऽऽलपत्पुनरिमां गरिमाभिरामाम्।
अस्यारिनिष्कृपकृपाणसनाथपाणेः, पाणिग्रहादनुगृहाण गणं गुणानाम्
॥११७॥

तथा च लघ्वप्रशस्तौ—
कीर्तिस्ते नृप! दूतिका सुररिपोरङ्कस्थितां भारतीं,
मां निर्देश्य ददौ तवेति गिरिशोऽभूदर्द्धनारीश्वरः।
ब्रह्माऽभूच्चतुराननः सुरपतिश्चक्षुःसहस्रं दधौ,
स्कन्दो मन्दमतिश्चकार न करस्पर्शं स्त्रियः शङ्कितः ॥११८॥
पूर्वस्यामुदयी भानुः, माता वै पूर्वतो मुखे।
यात्रा च प्रथमं यामे, नतिः कस्य विधीयताम्? ॥११९॥
इदं तीर्थमिदं तीर्थं, ये भ्रमन्ति तमोवृताः।
आत्मतत्त्वमजानन्तः, क्लिश्यन्ते ग्रहिला इव ॥१२०॥
तीर्थे तीर्थे भ्रमन्तीह, यस्य दर्शनवाञ्छया।
समस्तीह हि देहेऽसौ, देवो द्रष्टुं न शक्यते ॥१२१॥
उक्तं च— तीर्थानामप्युपरि यो, प्रोक्ता स्मृतिषु भारत!।
ततो भागीरथी श्रेष्ठा, ततोपि जननी मता ॥१२२॥
व्यासेनापि हि तीर्थेषु, परं तत्त्वमपश्यता।
सवित्री परमं तीर्थं, यदुक्तमैहलौकिकम् ॥१२३॥
यदुक्तम्—पितृमातृसहस्राणि, पुत्रदारशतानि च।
भवे भवे मनुष्याणां, को वा नैकस्य बान्धवः? ॥१२४॥
यतो भागवतेऽप्युक्तम्—
अटन्तुं हन्त! ते शैला—नुपलानर्चयन्तु च।
निम्नगासु निमज्जन्तु, नाथ! येभ्यः पृथग्भवान् ॥१२५॥
तस्मादितीवैस्तु कृतानसत्यैः, पाषाणमृद्दारुमयांश्च देवान्।
भजन्ति ये माधव! निन्दकास्ते, पूर्णः सदानन्दमयो हि विष्णुः॥१२६॥

आत्माऽपापोऽशुक्लकृष्णमयानमाता, विप्रो गृही यतिजनस्य इति प्रवादः ।
आनन्दबोधतनुके मयि पुंसि नित्ये, मोहो महानयमहो । महदिन्द्रजालम्
॥१२७॥

मनो विना न कोऽप्यस्ति, देवता भुवनत्रये ।
कल्पिते मनसा यच्च, तदन्यदपि देवता ॥१२८॥
यतः—वाणी विद्या धनं लक्ष्मीः, स्त्रीवाञ्छा मकरध्वजः ।
लाभो लम्बोदरश्चेति, सर्वाः कल्पितमूर्तयः ॥१२९॥
व्यासेनापि उक्तम्—
आत्मा नदी संयमतोयपूर्णा, सत्यावहा शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र !, न वारिणा शुद्धयति चान्तरात्मा ॥१३०॥
विष्णुरूपं जगदिदं, तथा शिवमयं परे ।
गन्तुं स्थातुं तत्र भोक्तुं, तद्वतानां न युज्यते ॥१३१॥
एका मूर्तिस्त्रयो भागाः, सत्यं स्याद् यदिदं वचः ।
नैशा नमन्ति किं विष्णुं ?, हरेर्भक्तास्तु नो शिवम् ? ॥१३२॥
लिङ्गमीशस्य पूज्यं स्या-त्तुत मूर्त्यन्तरं पुनः ।
लिङ्गं चेत् किं न सा मूर्तिर्या पूर्वमभवत् ततः ॥१३३॥
देहे भवन्तु वक्त्राणि, पञ्चापि न कौतुकम् ।
लिङ्गे तु पञ्च वक्त्राणि, सदाश्चर्यमहो ! महत् ॥१३४॥
स्थानस्थिते महेशस्य, लिङ्गेऽमूत्पञ्चवक्त्रता ।
पतिते वाऽस्ति सन्देहः, सम्यग् ज्ञात्वा निगद्यताम् ॥१३५॥
आद्ये तु लज्जया रुद्धे, नावकाशः क्वचिद्भवेद् ।
पतिते चेतनाऽभावात् , कुतोऽभूद्वक्त्रसम्भवः ॥१३६॥
सर्वेषामेव देवानां, मूर्तिद्वारेण वेद्यते ।
अपद्वारेण चैशत्वं, कारणं तद्विचार्यताम् ॥१३७॥
वह्निर्वसति तन्नेत्रं, मूर्तावीशस्य विश्रुतं ।
लिङ्गस्य दृश्यमानस्य, प्रणामः किं पराङ्मुखः ? ॥१३८॥

अप्रस्ताव इति ज्ञात्वा, चेत् पार्श्वे क्रियते नतिः।
युगान्तं तत्र निरतः, फलं किं दास्यते शिवः॥ ॥१३९॥
यादृशो भावने देव-स्तादृशी धूपवेलिका।
ईशस्य यादृशी मूर्तिः, प्रणामस्तादृगेव हि ॥१४०॥
न शिवो बलवान् किन्तु, तपो हि बलवत्तरम्।
पश्यतां यद्बलाद् गौर्याः, शिवश्चक्रे स्वकिङ्करः ॥१४१॥

उक्तं च कुमारसम्भवे—

अद्यप्रभृत्यवनताङ्गि ! तवास्मि दासः,
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ।
अह्नाय सा नियमजं क्लममुत्ससर्ज,
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥१४२॥
सर्वेषामपि देवानां, कन्दर्पो बलवत्तरः।
येन नाट्यं शिवो देवो, दर्पेणापि हि कारितः ॥१४३॥

कुमारसम्भवे—

पशुपतिरपि तान्यहानि कृच्छ्रा-दगमयदद्रिसुतासमागमोत्कः।
कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः॥१४४॥

पुनस्तत्रैव उक्तम्—

समदिवसनिशीथं सङ्गिनस्तत्र शम्भोः,
शतमगमदृतूनां साग्रमेका निशेव।
न च विषयसुखेषु च्छिन्नतृष्णो बभूव,
ज्वलन इव समुद्रान्तर्गतस्तज्जलौघैः ॥१४५॥
वह्निना क्षोभितः पश्चादपि वीर्यं मुमोच सः।
तन्मुखे तेन च त्यक्तं, गङ्गायामसहिष्णुना ॥१४६॥
स्नान्तीनां तत्र सरिति, प्रविष्टं कृत्तिकोदरे।
षड्भिर्मासैः(र्मासैः) सुतो जातः, स षण्मुख इति स्मृतः ॥१४७॥

नानाविगोपकैरेवं, सुतः सम्पूर्णतां गतः ।
तेनादि षष्टिदिवसे, तारकाख्यो निपातितः ॥१४८॥
पालकः कथ्यते विष्णुः, प्रत्यक्षं शत्रुरूपभाक् ।
बलिना सुखितं लोकं, यो न सेहे ह्यमर्षणः ॥१४९॥
प्रलयस्थितिसर्गाणां, हेतुर्देवत्रयी मता ।
ज्ञानं च समभूत्तस्य, न वेत्ति प्रतिपाद्यताम् ॥१५०॥
ज्ञानं चेत्तर्हि दैत्याली, स्वानर्थाय कथं कृता ? ।
पालिता संहृता चेति, पश्यतां बालवल्गितम् ॥१५१॥
मग्नाचार्यप्रवेशाभो, देवत्रितयमेलकः ।
एकस्य मुख्यता कार्य–योगादन्यस्य लाघवम् ॥१५२॥
एकैव मूर्त्तिर्विभेदे त्रिधामौ, न वाक्यमेतद् घटनामुपैति ।
हरेर्विरञ्चेर्न पुरा विवादो, वृद्धत्वहेतोर्भवता श्रुतः किम् ? ॥१५३॥
पुराणे श्रूयते नार्यः, पूर्वमासन्निरर्गलाः ।
ये ताभिस्तनया जाता–स्ते कस्य कुलदीपकाः ॥१५४॥
क्षयाहं कस्य कुर्वन्तु ? , यच्छन्तु च जलाञ्जलिम् ? ।
श्राद्धं च कस्य वै नित्यं ? , विचार्यार्थैर्निगद्यताम् ॥१५५॥
औद्दालकेः श्वेतकेतो–र्ये पूर्वमभवन् द्विजाः ।
स्वैरिणीभिश्च ये जाताः, कस्तेषां कुलजो मदः ? ॥१५६॥
यतो भारते—
अनावृताः स्ववर्णेषु, सर्वसाधारणाः पुरा ।
नार्यो बभूवुर्निर्वैरो, यतः सर्वोऽभवज्जनः ॥१५७॥
औद्दालकेः श्वेतकेतुर्विजने वीक्ष्य मातरम् ।
करेण नेतुमाकृष्टा–मपूर्वेण द्विजन्मना ॥१५८॥
कुपितो विदधे स्त्रीणा–मेकपत्नीव्रतस्थितिम् ।
पत्युश्च शासनात्तासां, न दोषः परसङ्गमे ॥१५९॥
भर्त्तुः कल्माषपादस्य, दमयन्ती पुरा सती ।
आज्ञया तनयं लेभे, वशिष्ठादश्मकाभिधम् ॥१६०॥

एषा पाण्डोः शिक्षा कुन्तीं प्रतिश्लोकम् ॥४॥

उक्तं च दर्पदलने—

अनादाविह संसारे, दुर्वारे मकरध्वजे ।
कुले च कामिनीमूले, का जातेः परिकल्पना ? ॥१६१॥

कुलस्य कमलस्येव, मूलमन्विष्यते यदि ।
दोषपङ्कप्रसक्तोऽन्तस्तदवश्यं प्रदृश्यते ॥१६२॥

एकश्चेत् पूर्वपुरुषः, कुले यस्या बहुश्रुतः ।
अपरः पापकृन्मूर्खः, कुले कस्यानुवर्तते ॥१६३॥

कुलाभिमानमरणस्य माता, पितामही वा प्रपितामही वा ।
योषित् स्वभावेन यदि प्रवृत्ता, तदेव दोषः कुलमूलकापः ॥१६४॥

कुलभिमानः कस्तेषां, जघन्यस्थानजन्मनाम् ।
कुले कुलङ्कषा येषां, भवन्त्या निम्नगा स्त्रियः ॥१६५॥

नैषधे—शुद्धिर्वंशद्वयी शुद्धौ, पित्रोः पित्रोर्यदेकशः ।
तदनन्तकुला दोषा—ददोषा जातिरस्ति का? ॥१६६॥

कुलाभिमानिभिर्वार्ता, छन्दोदेवस्य न श्रुता ।
यस्यां च श्रुतमात्रायां, प्रयाति कुलजो मदः ॥१६७॥

पुरा हि नारदस्याग्रे, द्रौपद्या सत्यघाकम् ।
यदास्यापि तदेवापि, श्रुतमप्यश्रुतीकृतम् ॥१६८॥

यतः—सुरूपाः पञ्च योद्धारः, पाण्डवाः पतयो मम ।
तथापि कुरुते वाञ्छां, मनः षष्ठेऽपि नारद ! ॥१६९॥

रहो नास्ति क्षणो नास्ति, नास्ति प्रार्थयिता नरः ।
तेन नारद ! नारीणां, सतीत्वमुपजायते ॥१७०॥

सुरूपं पुरुषं दृष्ट्वा, पितरं भ्रातरं सुतम् ।
मनश्चलति नारीणा—मेतत्सत्यं हि नारद ! ॥१७१॥

नारीणां न प्रियः कश्चि—न्न च द्वेष्योऽपि कश्चन ।
गावस्तृणमिवारण्ये, मिवसन्ति नवं नवम् ॥१७२॥

अग्निकुण्डसमा नारी, घृतकुण्डसमो नरः ।
तेन नारद ! नारीणां, संयोगं परिवर्जयेत् ॥१७३॥

वेदस्मृतिपुराणेषु, श्रुत्वा स्त्रीणां कुशीलताम् ।
अनुभूय स्वयमपि, मदं कुर्वन्ति किं मदाः ?॥१७४॥

अनादावत्र संसारे, तिस्रः सार्द्धाः पतिव्रताः ।
शेषास्तद्विपरीतास्तु, कः कुलस्य कदाग्रहः ? ॥१७५॥

यतः सप्तर्षिभिः प्रोक्तम्—

उच्छ्रितानि पतितानि, पतितान्युच्छ्रितानि च ।
कुलाध्ययनवृत्तानि, मया दृष्टान्यनेकशः ॥१७६॥

अधीत्य चतुरो वेदान्, साङ्गोपाङ्गान् सलक्षणान् ।
शूद्रात् प्रतिग्रहं कृत्वा, खरो भवति ब्राह्मणः॥१७७॥

खरो द्वादशजन्मानि, षष्टिजन्मानि, शूकरः ।
श्वानः सप्ततिजन्मानि, इत्येवं मनुरब्रवीत् ॥१७८॥

प्रकृत्या कर्मणा चापि, द्विधाः शूद्राः प्रकीर्त्तिताः ।
कर्मणा वणिजः शूद्राः, प्रकृत्या या निगद्यताम् ॥१७९॥

शूद्रांश्च कुर्वतां वैश्यान्, वैश्यान् शूद्रान् प्रकुर्वताम् ।
अपूर्वं सृष्टिकर्तृत्वं, गूर्जरब्राह्मणजन्मनाम् ॥१८०॥

प्रत्यक्षं कारवश्चौराः, स्वर्णकारादयो मताः ।
वैश्यास्ते हेतुना केन, शूद्राश्च वणिजः कथम्?॥१८१॥

भारते—वैश्यस्य सततं धर्मः, पाशुपाल्यं कृषिस्तथा ।
अग्निहोत्रपरिस्पन्दो—ऽवेदाध्ययनमेव च ॥१८२॥

वणिजां सत्पथस्थान—मातिथ्यं प्रशमो दमः ।
विप्राणां स्वागतं त्यागो, वैश्यधर्म्मः सनातनः ॥१८३॥

तिलान् गन्धान् रसांश्चैव, विक्रीणीत न वै क्वचित् ।
वणिक्पथसमासीनो, वैश्यः सत्पथमावसन् ॥१८४॥

भीष्मवाक्यम्—

पूर्वैः स्थानानि दत्तानि, द्विजानां वासहेतवे ।
तन्निर्वाहकृतो वैश्याः, शूद्रा वा सम्यगुच्यताम् ॥१८५॥

यदि शूद्रास्ततस्तेषां, ग्रहणात्पतिता द्विजाः ।
वैश्या वा तर्हि तद्वैश्यैः, शूद्रत्वं कथमर्जितम् ॥१८६॥

अथ—त एव शूद्रा ये जैनाः, कदाचिदिति वो मतिः ।
तर्हि ये भवतां भक्ता—स्तेषां वेश्मसु भुज्यताम् ॥१८७॥

तथा च-भारते शिवो गौरीं प्रत्याह—

शूद्रान्नं गर्हितं देवि !, दिवि देवैर्महात्मभिः ।
पितामहमुखोत्सृष्टं, प्रमाणमिति मे मतिः ॥१८८॥

ये शूद्रार्थमुपादाय, अग्निहोत्रमुपासते ।
ऋत्विजोऽपि हि शूद्रास्ते, ब्राह्मणादिषु गर्हिताः ॥१८९॥

न यज्ञार्थं क्वचिच्छूद्रा—द्विप्रो भिक्षेत कुत्रचित् ।
यजमानो हि भिक्षित्वा, चाण्डालः प्रेत्य जायते ॥१९०॥

शूद्रादादाय निर्वापं, ये पचन्ति द्विजातयः ।
ते यान्ति नरकं घोरं, ब्रह्मतेजोविवर्जिताः ॥१९१॥

शूद्रान्नं शूद्रसम्पर्कं, शूद्रेण च सहासनम् ।
शूद्राज्ज्ञानागमो चापि, स्वर्गस्थमपि पातयेत् ॥१९२॥

शूद्रान्नेनावशेषेण, जठरे यो म्रियेद् द्विजः ।
आहिताग्निस्तथा यज्वा, स शूद्रगतिमाप्नुयात् ॥१९३॥

पुनस्तत्रैव—

एकवर्णमिदं सर्वं, पूर्वमासीद्युधिष्ठिर ! ।
क्रियाकर्मविभेदेन, चातुर्वर्ण्यं व्यवस्थितम् ॥१९४॥

पुनः श्रूयते च—

प्रविष्टे भैरवीचक्रे, सर्वे वर्णा द्विजातयः ।
उत्थिते भैरवीचक्रे, सर्वे वर्णाः पृथक् पृथग् ॥१९५॥

शूद्रोपि शीलसम्पन्नो, गुणवान् ब्राह्मणो भवेत् ।
ब्राह्मणस्तु क्रियाहीनः, शूद्रापत्यसमो भवेत् ॥१९६॥

सद्यः पतति मांसेन, लाक्षया लवणेन च ।
त्र्यहेण शूद्रीभवति, ब्राह्मणः क्षीरविक्रयी ॥१९७॥

सर्वजातिषु चाण्डालाः, सर्वजातिषु ब्राह्मणाः ।
ब्राह्मणेष्वपि चाण्डालाश्चाण्डालेष्वपि ब्राह्मणाः ॥१९८॥

असच्छूद्रा अशूद्राश्च, यत्पनेयं कृता वृथा ।
मन्ये तल्लक्षणश्रेणिः, क्वापि सन्दर्श्यतां ततः ॥१९९॥

यतः—न क्षत्रियैर्भाति पुरं मनोज्ञं, न ब्राह्मणैः कारुमनैर्घनैर्न ।
तदेव रम्यं नृपतिः स एव, महात्मनो यत्र वसत्यनन्तः ॥२००॥

भारते—न योनिर्नापि संस्कारो, न श्रुतिर्नापि सन्ततिः ।
कारणानि द्विजत्वस्य, वृत्तमेव तु कारणम् ॥२०१॥

ब्रह्मस्वभावः कल्याणि !, समः सर्वत्र दृश्यते ।
निर्मलं सकलं ब्रह्म, यत्र तिष्ठति स द्विजः ॥२०२॥

न दर्भव्यग्रपाणिस्तु, न कमण्डलुमुण्डितः ।
न धौतवसनं बिभ्रज्जातो नग्नस्तु केवलम् ॥२०३॥

ब्रह्मबीजं तदाप्यासीत्, संस्काराच्च नतिः पुनः ।
कथमेतदुक्तं वाक्यं, ब्रह्मबीज ! नमोऽस्तु ते ॥२०४॥

ब्राह्मणा मुखतो जाता, ब्राह्मण्यस्तु कुतोऽभवन् ।
यद्येकत्र ततो यामिः, सङ्गस्तेषां न युज्यते ॥२०५॥

चेत्पृथग्वर्णसम्भूतास्ततोऽमूद्वर्णसङ्करः ।
वर्णसङ्करजातानां, ब्राह्मण्यं गतमेव वै ॥२०६॥

ये नीचस्थानतो जाता, योनौ कुर्वन्तु ते रतिम् ।
ये पवित्रान्मुखाज्जाता-स्तेषां तत्र रतिं कुतः ? ॥२०७॥

एकस्मात् स्थानतो जन्मक्रियाः षष्ठ्यादिकाः समाः ।
पश्चात् तन्तुत्रयोत्क्षिप्ते, द्विजोऽहमिति किं मदः ? ॥२०८॥

वेदार्हा ब्राह्मणाः केन, ब्राह्मण्यस्तु कुतो नहि ?।
तामिर्जातास्तु ये तेषां, वेदानां योग्यता कुतः ?॥२०९॥

वेदान्तेऽप्युक्तम्—

ब्राह्मणस्य च देहोऽयं, नोपभोगाय जायते।
इह क्लेशाय महते, प्रेत्यानन्तसुखाय ते ॥२१०॥

शौचाचाररता विप्रा, वन्धुभ्योऽपि स्पृशन्ति न।
मन्यन्तस्तातसन्देहं, कुलान्माद्यन्ति चाधिकम् ॥२११॥

द्विजानां लक्षणं ब्रह्म, तच्च क्वापि न दृश्यते।
ततस्तेन विहीनानां, ब्राह्मण्यं नामधारकम् ॥२१२॥

उक्तं च भारते—

मृगो दारुमयो यद्वद्, यद्वच्चर्ममयो गजः।
ब्राह्मणस्तु क्रियाहीनस्तथा वै नामधारकः ॥२१३॥

ब्राह्मणो ब्रह्मचर्येण, यथा शिल्पेन शिल्पिकः।
अन्यथा नाममात्रं स्या-दिन्द्रगोपककीटवत् ॥२१४॥

तत्रैव सर्पप्रश्ने—

विद्धि योगीन्द्र ! तं शूद्रं, यो रौद्रश्चारुवृत्तभुक्।
दुर्वृत्ता यान्ति शूद्रत्वं, त्रिवेदवेदिनोऽपि हि ॥२१५॥

तथा—सत्यं शौचं तपः शौचं, शौचमिन्द्रियनिग्रहः।
सर्वभूतदया शौचं, जलशौचं च पञ्चमम् ॥२१६॥

मुक्त्वा शौचचतुष्कं च, द्विजैः पञ्चममादृतम्।
स्नानादाचमनाच्छुद्धिं, प्रकुर्वद्भिर्दिने दिने ॥२१७॥

यत उक्तम्—

मृदो भारसहस्रेण, जलकुम्भशतेन च।
न शुद्ध्यन्ति दुराचाराः, स्नातास्तीर्थशतैरपि ॥२१८॥

कामरागमदोन्मत्ता, ये च स्त्रीवशवर्तिनः।
न ते जलेन शुद्ध्यन्ति, स्नातास्तीर्थशतैरपि ॥२१९॥

नोदकक्लिन्नगात्रोऽपि, स्नात इत्यभिधीयते ।
स स्नातो यो व्रतस्नातः, स बाह्याभ्यन्तर शुचिः ॥२२०॥
तत्र तत्र कुरुक्षेत्रं, तत्र तत्र त्रिपुष्करम् ।
निगृहीतेन्द्रियग्रामो, यत्रोपविशते मुनिः ॥२२१॥
संवत्सरेण यत्पापं, कुरुते मत्स्यबन्धकः ।
एकाहेन तदाप्नोति, अपूतजलसङ्ग्रही ॥२२२॥

उक्तं शिवधर्मोत्तरे —

लूतास्यतन्तुगलिते-कबिन्दौ सन्ति जन्तवः ।
सूक्ष्मा भ्रमरमानास्ते, नैव मान्ति त्रिविष्टपे ॥२२३॥

स्मृतावप्युक्तम्—

विंशत्यङ्गुलमानं तु, त्रिंशदङ्गुलमायतम् ।
तद्वस्त्रं द्विगुणीकृत्य, दयावान् गालयेज्जलम् ॥२२४॥
तस्मिन् वस्त्रे स्थितान् जीवान्, स्थापयेज्जलमध्यतः ।
एवं कृत्वा पिबेत्तोयं, स याति परमां गतिम् ॥२२५॥
यः कुर्यात् सर्वकार्याणि, वस्त्रपूतेन वारिणा ।
स मुनिः स महासाधुः, स योगी स महाव्रती ॥२२६॥
चित्तं रागादिभिः शुद्धं, वचनं सत्यभाषणैः ।
ब्रह्मचर्यादिभिर्गात्रं, शुद्धो गङ्गां विनापि सः ॥२२७॥
परदारपरद्रोहपरद्रव्यपराङ्मुखः ।
गङ्गाप्याह कुतोऽप्येत्य, मामयं पावयिष्यति ॥२२८॥
जङ्गमं स्थावरं चैव, द्विविधं तीर्थमुच्यते ।
जङ्गमं ऋषयस्तीर्थं, स्थावरं तैर्निषेवितम् ॥२२९॥

उक्तं च भारते—

ज्ञानपालिपरिक्षिप्ते, ब्रह्मचर्यदयाम्भसि ।
स्नात्वाऽतिविमले तीर्थे, पापपङ्कापहारिणि ॥२३०॥

ध्यानाग्नौ जीवकुण्डस्थे, दममारुतदीपिते।
असत्कर्मसमित्क्षेपैरग्निहोत्रं कुरूत्तमम् ॥२३१॥
अगाधे विमले शुद्धे, सत्यशीलशमे हृदि।
स्नातव्यं जङ्गमे तीर्थे, ज्ञानाभिवट्यापरैः ॥२३२॥
आचारवस्त्राश्चलगालितेन, सत्यप्रसन्नसमशीतलेन।
ज्ञानाम्बुना स्नाति च यो हि नित्यं, किं तस्य भूयात् सलिलेन कृत्यम्?
॥२३३॥
न मृत्तिका नैव जलं, नाप्यग्निः कर्मशोधनम्।
शोधयन्ति बुधाः कर्म, ज्ञानध्यानतपोजलैः ॥२३४॥
एकेऽश्नन्ति सदा मांसं, मत्स्यादादपरेऽपि च।
स्वं स्वं ब्राह्मणं प्रशंसन्ति, केषां धर्मोऽनुगम्यताम् ?॥२३५॥
तथाच–एकस्तु मलहारी स्याच्चैत्याश्रमरक्षिः परः।
पुरोहितश्च व्यासश्च, पञ्चमो गणकः स्मृतः ॥२३६॥
प्रथमश्च द्वितीयस्तु, कर्मकृद् द्वयमुच्यते।
व्यासस्तु क्षणकारी स्यात्, शास्त्रे तुर्यस्य का गतिः ? ॥२३७॥
उक्तं च–ग्रामकूटस्त्रयो मासान्, माठाख्यं दिनत्रयम्।
शीघ्रं नरकवाञ्छा चेद्, दिनमेकं पुरोहितः ॥२३८॥
राज्ञि राष्ट्रकृतं पापं, राज्ञः पापं पुरोहिते।
भर्तरि स्त्रीकृतं पापं, शिष्यपापं गुरौ भवेत् ॥२३९॥
गणकस्तिथिवारादेर्मुहूर्तस्य च सूचकः।
धर्मोपदेशकश्चैषु, कतमस्तन्निगद्यताम् ? ॥२४०॥
पुराणं मानवो धर्म, इति वाक्यं हि कामधुक्।
द्विजानामन्यथा हेतौ, क्रियमाणे किमुत्तरम् ॥२४१॥
पुराणं मानवो धर्मः, साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि, न हन्तव्यानि हेतुभिः ॥२४२॥
जन्मेजयनरेन्द्रेण, सन्देहत्रितयं कृतम्।
पाप्मना तेन तद्देहे, मण्डलत्रितयं स्थितम् ॥२४३॥

भयमेवं समुत्पाद्य, जन्मेजयनिदर्शनात् ।
स्वैरं विप्रा विलसत, हेत्वातङ्कविवर्जिताः ॥२४४॥

विष्ठाशी सर्वदा पूतः, काकः केन गुणेन च ।
द्विजैः पवित्रं मन्वानै-र्मौज्यादौ पूज्यते सदा ॥२४५॥

वैश्वदेवस्य देवानां, पितॄणां पूजनक्षणे ।
काकस्य दीयते पङ्क्तिरपवित्रस्य किं द्विजैः ?॥२४६॥

कथयन्ति मुखे शौचं, संस्कारेष्वखिलेष्वपि ।
गृह्णन्ति कोरवस्त्राणि, मासाहसखगोपमाः ॥२४७॥

नित्यं शुद्धः कारुहस्तः, पण्यं यच्च प्रसारितम् ।
ब्रह्मचारिगतं भैक्ष्यं, सर्वं मेध्यमिति स्मृतिः ॥२४८॥

अशक्यपरिहार्येऽर्थे, द्विजानामेवमुत्तरम् ।

ब्राह्मण्या भाण्डमुत्क्षिप्तं, परिवेषणहेतवे ।
तत्स्पृष्टमपि न त्याज्यं, यावद्भूमौ न मुच्यते ॥२४९॥

भूमिमुक्तं तदैव स्यात्, तद्भाण्डं त्याज्यमेव हि ।
एतावदपवित्रा भूर्ब्राह्मणी तु सदा शुचिः ॥२५०॥

भोजनावसरे विप्राः, पृष्पासनसंश्रिताः ।
भुञ्जानाः स्वं स्पृशन्तोपि, भूमेर्योगाच्च दूषिताः ॥२५१॥

यद्येवं गोमयेनोपलिप्ता भूः, शुद्धा स्यादिति निश्चयः ।
एकवेलं विलिप्यैषा, मुच्यते किं पुनः पुनः ॥२५२॥

अथ—यथा प्रक्षालितं वस्त्रं, पवित्रं मन्यते द्विजैः ।
तद्वत् स्वयं कृतं भाण्ड- मपि नादीयते कथम् ? ॥२५३॥

कुलालः शूद्र एव स्यात्, तेन पक्वं स्ववह्निना ।
विप्रैः पवित्रं मन्वानैर्भाण्डमादीयते कथम् ? ॥२५४॥

ब्राह्मणानां हि भाण्डस्थं, पूतमन्नं तदप्यहो ।
अपूतं वणिजां दृष्टि—गोचरे स्यात् समागतम् ॥२५५॥

तत्यान्यमेवं विप्राणां, भोक्तुं नो युज्यते क्वचित् ।
अन्नस्य च व्यवस्थैवं, कूपस्याज्यस्य का कथा ? ॥२५६॥
श्रूयते च–नीली पट्टे जलं तक्रे, चित्रा गौर्म्लेच्छमन्दिरे ।
भिक्षान्नं पञ्चगव्यं च, पवित्राणि युगे युगे ॥२५७॥
अपूपां गुटिकां प्राहुः, पुनः पट्टस्थितां नहि ।
युक्तं च शुद्धयंत्र हत्या, हत्यया मिलिता सती ॥२५८॥
क्षत्रियाणां च वैश्यानां, शूद्राणां भाण्डतो द्विजैः ।
तक्रमादीयते तस्मिन्, पक्वमन्नं न गृह्यते ॥२५९॥
कोरमन्नं सदा पूतं, पानीयं त्वस्नोपि च ।
त्रयाणां योगतः सिद्धं, दूष्यं तत् कथमुच्यते ? ॥२६०॥
घृतयोगाच्च भाण्डस्य, पूतत्वं जायते ध्रुवम् ।
तदा चाण्डालभाण्डस्थं, घृतमादीयते न किम् ? ॥२६१॥
ब्रह्मणा विहितां सृष्टिं, प्राहुर्वेदविशारदाः ।
ते त्वसद्रूप्यास्ततस्तेन, कतमः सृष्टिकारकः ? ॥२६२॥
एकार्णवे समुत्पन्ने, यदेको नाभिसम्भवः ।
अपरे तु कथं जाताः?, कथमेतच्च कथ्यते ॥२६३॥
प्रादुरासन् कुतो वेदाः?, कतमो हंसवाहनः ? ।
कतमः पद्मवक्त्रोऽभूत्, कतमश्चतुराननः ? ॥२६४॥
भारती तनया कस्य ?, गायत्री कस्य पत्न्यभूत् ?
भृगुर्न्यः कतमो जातः ? कतमाद्वर्णसम्भवः ? ॥२६५॥
कतमाद्वालखिल्यास्ते, भारती को ह्यकामयत् ? ।
दक्षः प्रजापतिः कस्मात् ?, मरीचिस्तु कुतोऽभवत् ॥२६६॥
इयं हि लक्षणश्रेणिः, सर्वेषां च समा मता ।
एतस्य [illegible] तदन्येषां, लक्षणं किञ्चिदुच्यताम् ? ॥२६७॥
शिवशक्तेः समायोगात्, केपि सृष्टिं विदुः परे ।
कुब्जिकारूपमाधाय, शक्त्या सृष्टिं तथैकया ॥२६८॥

उत्पत्तौ वालिखिल्यानां, का शक्तिः परिकल्पिता ?।
तथा द्रोणसमुत्पत्तौ, द्वयोर्योगः कथं कृतः ? ॥२६९॥

महाभारते शान्तिपर्वणि पितामहं धर्मपुत्रः पृच्छति,—
शतायुर्वै पुरुषः, शतवीर्यः शतेन्द्रियः।
कस्मात् म्रियन्ते पुरुषाः बाला इति पितामह ! ॥२७०॥

शतायुर्वै पुरुष, इति वेदवचो ध्रुवम्।
दश वर्षसहस्राणि, आयुर्दशरथे कथम् ? ॥२७१॥

उक्तं रघौ–पृथिवीं शासतस्तस्य, पाकशासनतेजसः।
किञ्चिदूनमनूनार्द्धेः, शरदामयुतं ययौ ॥२७२॥

श्रूयते–अश्वत्थामा बलिर्व्यासो, हनुमाँश्च विभीषणः।
कृपः परशुरामश्च, सप्तैते चिरजीविनः ॥२७३॥

हिरण्यकशिपोरायुर्वाल्मीकेर्लोमशस्य च।
वशिष्ठादिमहर्षीणां, श्रुत्वा चेतो विमुह्यति ॥२७४॥

दैत्यत्वे च मुनित्वे च, नृपतित्वे तथैव च।
वेदवाक्यमतिक्रम्य, कथमायुर्विवर्द्धते ? ॥२७५॥

पुच्छाधः पूज्यते धेनोः, कथं शण्डो न पूज्यते ?।
सर्वदेवमये स्थाने, यश्चाकामति हेलया ॥२७६॥

शण्डस्य पाणिग्रहणा–दहो पुण्यमुपार्जितम्।
सा धेनुरेकपत्नी स्या–दनूढावर्जकश्च सः ॥२७७॥

कुलसगः कुवर्णो यः, शण्डो भवति कश्चन।
स नील इति जल्पद्भिः, स्वार्थिकैः श्रूयतेतराम् ॥२७८॥

विवाहश्च तथा धेन्वा महोत्सवपुरस्सरम्।
कार्यते यैर्न दोषोऽस्ति, तेषां लोभे मतिर्यतः ॥२७९॥

ये तु क्लेशशतैरर्थ–मुपात्तं तद्वचोबलात्
क्षयं नयन्ति, इमन्यास्तेषां प्रावीण्यमद्भुतम् ॥२८०॥

शुक्ला स्याद् ब्राह्मणी धेनु, रक्तवर्णा च क्षत्रिणी ।
पीता वैश्यी च विज्ञेया, कृष्णवर्णा तु शूद्रिणी ॥२८१॥
कृष्णवर्णा पुष्पिता या च, कपिला कर्बुरा तथा ।
सर्वेऽपि शूद्रिकाभेदाः, शेषाः स्युरिति विश्रुतम् ॥२८२॥
श्वेतरोमधरो यद्वन्, नरो भवति गर्हितः ।
तद्वत् कृष्णवर्णा धेनुः स्याज्जुगुप्स्या हि सतां पुनः ॥२८३॥
कृष्णवर्णा तु गृहस्थस्य, नार्हा स्थापयितुं गृहे ।
तामादातुं द्विजैर्नाना–प्रकारैः श्रूयतेतराम् ॥२८४॥
वत्सला गुणसम्पूर्णा, तरुणीं वत्ससंयुताम् ।
दत्त्वेदृशीं गां विप्राय, सर्वपापैः प्रमुच्यते ॥२८५॥
बलान्विताः शीलवयोपपन्नाः, सर्वाः प्रशंसन्ति सुगन्धिवत्यः।
यथाहि गङ्गा सरितां वरिष्ठा, तथा जनानां बहुला गरिष्ठा ॥२८६॥
तस्मात्प्रदाने बहुलाप्रदानं, सद्भिः प्रशस्तं कपिलाप्रदानम् ।
भारते शान्तिपर्वणि । तथात्र रघौ वशिष्ठधेनुरेवं वर्ण्यते–
ललाटोदयमाभुग्नं, पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं, सन्ध्येव शशिनं नवम् ॥२८७॥
सापि कपिला न ॥ ब्राह्मणैरेव जीवानां, कृता वर्णादिकल्पना ।
अस्माकं तु मते गावः, समानाः सकला अपि ॥२८८॥
यावज्जीवं नरः कश्चित्, कृत्वा पुण्यपरम्पराम् ।
मृतः क्वापि विदेशेऽसौ, प्रेतकार्यं च नाभवत् ॥२८९॥
अपरः पापकृद् धूर्तः, क्रोधनो लोभवांस्तथा ।
स स्वगेहे मृतस्तस्य, प्रेतकार्यं सुतादिभिः ॥२९०॥
विदधे धेनुदानाद्यं, सर्वमुद्यापनं द्विजैः ।
त्रिदिवं कस्तयोर्यातो, नरकं कश्च जग्मिवान् ? ॥२९१॥
आद्यश्चेन्नरकं स्वर्गात्, पातितो ब्राह्मणैर्बलात् ।
द्वितीयस्तु पुनः श्वभ्राद्, बलात्स्वर्गं निवेशितः ॥२९२॥

देवताऽऽराधनैर्दानैस्तपोभिस्तर्हि पूर्यताम् ।
ब्राह्मणा यत्र नेष्यन्ति, गन्तव्यं तत्र निश्चितम् ॥२९३॥

न देवयज्ञानुगतो ययातिः, शर्मिष्ठया नापि च शुक्रपत्न्या ।
न शान्तनुर्योजनगन्धया च, तस्यापि पुत्रौ न तयोर्वधूभिः ॥२९४॥

न रामतातस्तिसृभिः प्रियाभि–र्न सीतया सोऽपि च रामभद्रः ।
न रावणस्तत्प्रियया‍ऽनुयातो, दुर्योधनो नैव च भानुमत्या ॥२९५॥

नानुप्रयातश्च हरिः प्रियाभिस्तद्वान्धवस्तत्प्रियया‍पि नैव ।
क एष धर्मः प्रविशन्ति वह्निं, नार्योऽधुना कान्तमुपासितुं स्वम् ॥२९६॥

उक्तश्चर्यौ अर्थं प्रति वसिष्ठशिष्येण—

रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥२९७॥

यदा भगीरथो गङ्गां, स्वर्गाद्भूमौ समानयत् ।
तदा पूर्वं महेशस्य, जटाजूटे पपात सा ॥२९८॥

ततश्च वासुदेवस्य, पादे मूर्ध्नि ततो गिरेः ।
क्रमाच्च पृथिवीं लेभे, पुराणे श्रूयते ह्यदः ॥२९९॥

स्थिरत्वाच्च गिरेः शृङ्गे, पतत्येषा न कौतुकम् ।
वासुदेवेशयोः किं न, कार्यान्तरमभूयत ? ॥३००॥

कथयन्ति वधूशुद्धिं, वैश्वदेवप्रवेशनात् ।
कुन्त्यास्तु सा कथं जाता ? यत् पञ्चपतिका च सा ॥३०१॥

पाण्डोः सुतानां च कुरूत्तमाना–मनागतं यच्चरितं चकार ।
राज्यं जितं केन दुरोदरेण, सपादलक्षेऽपि तदेव नाल्लयत् ॥३०२॥

न रात्रेभोजनात् पार्थ, न वृन्ताकैर्न मूलकैः ।
नालिकेरैर्न मधुना, किन्तु तुम्बीफले स्थितम् ॥३०३॥

काकविष्ठासमुद्भूतस्तथा कृमिकुलाकुलः ।
पिप्पलः पूज्यते मूढैः कथमाम्रो न पूज्यते? ॥३०४॥

'आत्मा वै जायते पुत्र', इति सत्यं वचो यदि।
पिप्पलस्य तथा शम्याः, कथं नैका फलावलिः ? ॥२०५॥
एकस्यचेत् पिप्पलस्य, कारितं पाणिपीडनम् ।
कुमाराणां तु तस्यापि, दर्श्यतां किञ्चिदन्तरम् ॥२०६॥
पिप्पलस्याथ पिप्पल्याः, शम्या वा तन्नरस्य च।
ज्ञात्वाऽन्तरं विवाहश्च, क्रियतां नो यतस्ततः ॥२०७॥
न रतिर्यस्य रुक्मिण्या, न श्रियाऽतिमनोज्ञया ।
गोपीभिरपि नो जाता, किन्तु लक्ष्म्या भविष्यति ॥२०८॥
भुङ्क्ते तां नररूपेण, सुरस्यागम्य वा पुनः ।
कीदृरूपेण वा कुन्योर्हरिः सम्यग्विमृश्यताम् ॥२०९॥
न दानान्नापि शीलाच, न सत्याचिरपालितात् ।
मुक्तिः स्यात् किन्तु वक्त्र(तुल)स्या, दास्यत्येव हरिप्रिया ॥२१०॥
हररतिप्रियैवैषा, पूज्यते यैस्तु लक्ष्मिका ।
वृक्षास्ते नररूपेण, परं पत्रादिवर्जिता ॥२११॥
विधेर्विवायिनो विप्रा, अपूर्वाः सृष्टिकारकाः ।
स्वयम्भूः सृष्टिकृत्सेषु, सृष्टिसंहारयोरपि ॥२१२॥
तीर्थानामष्टपष्टिश्च, देवानां कोट्यो घनाः ।
नवकोट्यस्तु देवीनां, कस्याराधनतः फलम् ॥२१३॥
इयं भगवती लक्ष्मीः, पुरुषोत्तमवल्लभा ।
अनेन त्रिविधेनापि, भुज्यते तत्र सुन्दरम् ॥२१४॥
अथ चैवं नराः सर्वे, हरेरंशाः प्रकीर्तिताः ।
स्वां प्रियां प्रति मा कोपं, कुरुध्वं परसङ्गमे ॥२१५॥
आमलक्या व्रतपरान्, हरिः प्रेक्ष्य हसत्यहो ! ।
बुभुक्षया फेरवैश्च, सन्ति भव्यं विगोपिताः ॥२१६॥
एकमेव हि कुकुट्या, मर्कट्याश्च, महाव्रतम् ।
तारयिष्यति किं शेषैः, शरीरक्लेशकारिभिः ? ॥२१७॥

पतिव्रताव्रतं लोप्तुं, दैत्यस्त्रीणां तु मायया ।
विष्णुना नारदेनाथ, विहितेयं प्रतारणा ॥३१८॥
क्वापि गायन्ति नृत्यन्ति, कूर्दन्ति ग्रहिला इव ।
चुम्बपानं प्रकुर्वन्ति, कौलीनत्वमितीति यत ॥३१९॥
एतदेव व्रतं स्त्रीणां, यद्भक्तिर्भर्तरि स्वके ।
तां परित्यज्य नीयन्ते, धूर्तैरन्येषु धर्मसु ॥३२०॥
उक्तं च स्मृतौ — अवशा विवशा या तु, पतिश्चैवमनस्तया ।
अन्धेतमसि मज्जन्ति, यावदिन्द्राश्चतुर्दश ॥३२१॥
त्रिविधेन प्रकारेण, भर्त्तुर्या विहिते रता ।
पतिव्रता तु सा ज्ञेया, न योनिपरिरक्षणात् ॥३२२॥
अत्रापि विधवानां तु, धर्ममुक्तं मनीषिभिः ।
सधवानां तु पूर्वस्मादन्यत् क्वापि न दृश्यते ॥३२३॥
बहूनि सन्ति तीर्थानि, सर्वेऽप्यङ्कः कथं न हि ? ।
शरीरं विद्यते स्थूलं, यद्भिः सर्वत्र लभ्यते ॥३२४॥
हृदये यदि देवोऽस्ति, तदाऽङ्कैः किं प्रयोजनम् ? ।
तत्र चेन्नास्ति किं तैस्तु, शरीरक्लेशकारिभिः ? ॥३२५॥
शिवस्य मस्तके गङ्गा, श्रूयते जलवाहिनी ।
किं घटाद्बिन्दुपातेन, तस्य शैत्यं भविष्यति ? ॥३२६॥
अतिनिर्मिपितादग्नि-श्चन्दनादपि जायते ।
तथाभूतस्य लिङ्गस्य, युक्तं तज्जलसेचनम् ॥३२७॥
स्कन्धे विहङ्गिकां कृत्वा, गाङ्गमानीयते जलम् ।
किं तेन नीरवाहीशो, न गाङ्गैः शिरसि स्थितैः ॥३२८॥
सुप्तस्तु दृश्यते विष्णुर्नृत्यन्नपि हि दृश्यते ।
ऊर्ध्वः सदैव तिष्ठेतोपविष्टः किं न दृश्यते ? ॥३२९॥
सर्वेषामपि देवानां, कूर्चः समवलोक्यते ।
विष्णोर्न दृश्यते हेतुस्तत्र कोऽत्र प्रकाश्यताम् ? ॥३३०॥

ब्रह्मरुद्रादिदेवाना-मासने पङ्क्तो भवेत् ।
सिंहासनं कथं नास्ति, सर्वैश्वर्यप्रकाशकम् ? ॥३३१॥
सर्वेषामपि चैकैकं, छत्रं मूर्धनि दृश्यते ।
जगत्त्रयाधिपत्यस्य, सूचकं तत्त्रयं न किम् ? ॥३३२॥
प्रासादे मण्डपश्चैकः, सर्वेषां बहवो न किम् ? ।
कथं च वणिजां चैत्ये, तेषामष्टोत्तरं शतम् ? ॥३३३॥
मानवानां हि वाक्येषु, प्रतिष्ठेवावलोक्यते ।
देवानां वचसि क्वापि, बाल्यवत् सा न दृश्यते ॥३३४॥
अट्टहासो मनुष्याणां, सर्वथैव निषिध्यते ।
देवानां तु पुनर्मुख्यः, सर्वशास्त्रेषु वर्ण्यते ॥३३५॥
मानुष्येषु पुनर्नृत्यं, नटादीनां च शोभते ।
देवानां तेन चोत्कर्षः, प्रत्युत श्रूयतेतराम् ॥३३६॥
अस्थिलेशो मनुष्याणा-मपावित्र्यकृते भवेत् ।
रुण्डमुण्डादिभिस्तेषां, प्रत्युताभरणस्थितिः ॥३३७॥
दिवा क्षौमापणं नृणां, लज्जायै तैः समादृतम् ।
युक्तमेतत्समाख्यातं, न देवचरितं चरेत् ॥३३८॥
शिखण्डिनः समुत्पत्त्या, श्रुतया कस्य मानसम् ।
मन्यते सत्यमेतच्च, मुक्त्वा तद्वादिनो नरान् ॥३३९॥
सूर्यान्वयमहीशानां, वशिष्ठः श्रूयते गुरुः ।
एकः सप्तऋषीणां च, मध्ये संदृश्यतेऽम्बरे ॥३४०॥
अर्बुदाद्रेः समानेता, चैकस्तत्रैव विद्यते ।
वशिष्ठश्चैक एवासीत्, सञ्जाता बहवोऽथवा ? ॥३४१॥
दीक्षितैः पाठकैश्चापि, आचार्यैर्याज्ञिकैस्तथा ।
वेदोक्तैः क्रियते मन्त्रैर्यागश्चेतच्च निश्चितम् ॥३४२॥
विश्वामित्रवशिष्ठाद्यैः, शिवभक्तैर्जटाधरैः ।
गृहस्थैर्ये विधीयन्ते, यागास्तैस्ते कथं कृताः ? ॥३४३॥

रघावुक्तम्—स जातकर्मण्यखिले तपस्विना, तपोवनादेत्य पुरोधसा कृते ।
दिलीपसूनुर्मणिराकरोद्भवः, प्रयुक्तसंस्कार इवाधिकं बभौ ॥३४४॥

उक्तमनर्घराघवे—
प्रज्ञातब्रह्मतत्त्वोऽपि, स्वर्गायैव खेलति ।
गृहस्थसमयाचार-प्रक्रान्तैः ससतन्तुभिः ॥३४५॥

दशमीमिश्रितामेके, केवलामपरे पुनः ।
घटिकासङ्ख्यया केचित्, केचित्पञ्चदशीं तिथिम् ॥३४६॥

कुर्वन्त्येकादशीमेवं, नानामतविकल्पनात् ।
कथं दृष्टचा विहीनस्य, मार्गमन्धः प्रकाशयेत् ? ॥३४७॥

द्विधा ये मुनयः प्रोक्ता, ब्रह्मराजर्षिसञ्ज्ञया ।
जटाधराः समस्तास्ते, सर्वे वल्कलवाससः ॥३४८॥

तेषां मते शिवो देवोऽन्यस्य कुर्वन्ति नो नतिम् ।
द्विविधा अपि ते शैवाः, को मदस्तैर्द्विजन्मनाम् ? ३४९॥

उक्तं च शैवागमे—सत्येन ब्रह्मचर्येण, तपसा संयमेन च ।
मातङ्गोपि मुनिः सिद्धो, न सिद्धास्तीर्थयात्रया ॥३५०॥

[ षडक्षरेण पूतो यश्चाण्डालो वाऽथ ब्राह्मणः ।
दीक्षितः शिवमन्त्रेण, सभस्माङ्गः शिवो भवेत् ॥३५१॥ ]

उक्तंच कुमारसम्भवे—
ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः ।
अवतेरुर्जटाभारैर्लिखितानलनिश्चलैः ॥३५२॥

अत्र ऋषयो जटाधराः ।
तृतीयाश्रममापन्नान्, ब्रूथ चेद् ब्राह्मणान् ऋषीन् ।
वाल्मिकीव्यासमुख्यानां ब्राह्मण्यमभवत्कथम् ? ॥३५३॥

अथ—भस्माङ्कुरास्तु ते सर्वे, ये जाता वनवासिभिः ।
तैः कृतानि पुराणानि, प्रमाणीक्रियतां कथम् ? ॥३५४॥

अन्त्याश्रमसमासीनो, द्विजस्तु भगवान् भवेत् ।
त्यक्तोपवीतकाषाय-वसनो मुण्डितः पुनः ॥३५५॥

मैसादी विप्रगेहेषु, विष्णुमन्त्रेण पावितः ।
सर्वकर्मविनिर्मुक्तो, विष्णोरन्यस्य नो नतः ॥३५६॥
कुटीचरादिभेदैस्तु, चतुर्द्धा भुवि विश्रुतः ।
न करोति स्वयं हिंसां, हिंसाशास्त्राणि नो दिशेत् ॥३५७॥
दग्धं च-कुटीचरं दहेदग्नौ, जले क्षिपेद् बहूदकम् ।
भूमौ विनिक्षिपेद्धंसं, परमहंसं वने त्यजेत् ॥३५८॥
एवंविधस्तु संन्यासी, विप्राणां गुरुरिष्यते ।
शैवैस्तु मुनिभिः साकं, कः सम्बन्धो द्विजन्मनाम् ॥३५९॥
नैकतानि पुराणानि, स्मृतयोपि च तैः कृताः ।
शास्त्रैस्तैर्बत विप्राणां, मत्तता किमियत्यहो ! ॥३६०॥
शैवाः कथयन्ति—
शिवशक्तिसमुत्पन्ना, जात्या वदन्ति ब्राह्मणाः ।
ध्यायन्ति केशवं देवं, प्रत्यक्षं गुरुतल्पगाः ॥३६१॥
जिनाङ्गुलप्रमाणेन, क्रियते घृतलेखनी ।
जिना न सन्ति किं तेषां, सङ्ख्या वेदे प्रकाशिता ? ॥३६२॥*

---

* ॐ त्रैलोक्यप्रतिष्ठितान् चतुर्विंशतितीर्थङ्करान् ऋषभाद्यान् वर्द्धमानान्तान् सिद्धान् शरणं प्रपद्ये । ॐ पवित्रं नग्नमुपस्पृशामहे येषं नग्नं सुनग्नं येषां जातं सुजातं येषां वीरं सुवीरं इत्यादि ऋग्वेद-यजुर्वेदे च रक्षामन्त्रः— ॐ नमो अर्हते ऋषभाय कात्यायनशाखायां—आदौ ऋग्वेदे तथा यजुर्वेदे ॐ ऋषभं पवित्रं पुरुहूतमध्वरं यज्ञेषु नग्नपरमं माहस्यं स्तुतावारं शत्रुञ्जयं तं पशुरिन्द्रमाहुतिरिति स्वाहा ॐ त्रातारमिन्द्रं ऋषभं वदन्ति अमृतारमिन्द्रं हवे सुगतं सुपार्श्वमिन्द्रं तहेव शक्रमजितं तद्वर्द्धमानं पुरुहूतमिन्द्रमाहुतिरिति स्वाहा । ॐ नग्नं स्ववीरं दिग्वाससं ब्रह्मगर्भं सनातनं उपैमि वीरं पुरुषमर्हन्तमादित्यवर्णं तमसः परस्तात् स्वाहा । ॐ स्वस्ति नं इन्द्रो वृद्धश्रवाः स्वस्तिनः । पूषा विश्वे वेदाः स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पति दातु ।

उक्तंच— ' जिनाङ्गुलप्रमाणा दर्वी ', तथा—

नानास्थानानि दत्तानि, मनुजैश्च सुरैरपि ।
जिनचैत्यनिवेशः किं, तेषु सर्वत्र दृश्यते ? ॥३६३॥

नगरे त्रीणि चैत्यानि, द्वितयं वायडे तथा ।
नड्डूले द्वितयं चैव, पल्ल्यां त्रितयमेव च ॥३६४॥

एकं वटमहास्थाने, पञ्चमालंवरे पुनः ।
पञ्चकं पुष्करिण्यां तु, शुद्धदन्त्यां तथैककम् ॥३६५॥

डीसके समभूदेकं, एकं मोढेरके पुनः ।
दशकं खेटयुग्मे च श्रीमाले पञ्चकं पुनः ॥३६६॥

मठास्तथैव जैनानां, मुनीनां वासहेतवे ।
गच्छास्तेषां च तन्नाम्नाऽद्यापि सर्वत्र विश्रुताः ॥३६७॥

शालातालानिवेशेन, तेषां तत्र व्यवस्थितिः ।
कथ्यते किं द्विजैर्जैना,,पाश्चात्याः साधवस्त्वमी ? ॥३६८॥

उक्तंच— जिनेन्द्रो वीतरागोऽर्हन्, केवली च त्रिकालवित् ।
एतानि कस्य नामानि, कथ्यन्ते बालकैरपि ॥३६९॥

नाममालायां । प्रभासपुराणे—

भवस्य पश्चिमे भागे, वामनेन तपः कृतम् ।
तेनैव तपसाऽऽकृष्टः, शिवः प्रत्यक्षतां गतः ॥३७०॥

पद्मासनसमासीनः, श्याममूर्त्तिर्दिगम्बरः ।
नेमिनाथः शिवेत्येवं, नाम चक्रेऽस्य वामनः ॥३७१॥

कलिकाले महाघोरे, सर्वपापप्रणाशकः ।
दर्शनात्स्पर्शनाद् देवि !, कोटियज्ञफलप्रदः ॥३७२॥

अहिल्यागमने जातं, दैत्यानां च वधे कृतम् ।
वधे वृत्तस्य यत्पापं, तत्पापं क्षालयाम्यहम् ॥३७३॥

---

दीर्घायुर्बल०००० शुभमाता । ॐ रक्ष रक्ष अरिष्टनेमि स्वाहा वामदे
शान्त्यर्थमनुविधीयते सोऽस्माकं अरिष्टनेमि स्वाहा । इत्यादिकं प्रत्य

उज्जयन्तगिरौ रम्ये, माघे कृष्णचतुर्दशी ।
तस्यां जागरणं कृत्वा, जातोऽयं निर्मलो हरिः ॥३७४॥

इदमपि प्रभासपुराणे—
युगे युगे महापुण्या, दृश्यते द्वारिकापुरी ।
अवतीर्णो हरिर्यत्र, प्रभासे शशिभूषणः ॥३७५॥
रैवताद्रौ जिनो नेमि-र्युगादिर्विमलाचले ।
ऋषीणामाश्रमा देवि ! , मुक्तिमार्गस्य कारणम् ॥३७६॥

वशिष्ठपद्मपुराणेऽप्युक्तम्—
शाला तु ब्रह्मशाला स्यात् , नाला तु जिनमन्दिरम् ।
श्वेताम्बरोपदेशेन, श्रावकैस्तद्विधीयते ॥३७७॥

पार्वती आह—
कीदृशाश्च किमाहाराः, कर्म कुर्वन्ति कीदृशम् ? ।
अवतारः कथं तेषां, महादेव ! निगद्यताम् ? ॥३७८॥

ईश्वर उवाच—
तपःशोषितसर्वाङ्गा, मलक्लिन्नकलेवराः ।
स्नसास्थिचर्मवपुषो, निहतान्तरशत्रवः ॥३७९॥
तुम्बीफलकरा भिक्षा-भोजिनः श्वेतवाससः ।
सकम्बला रोमयुता, ऊर्णारोमप्रमार्जनाः ॥३८०॥
गृह्णन्ति शुद्धमाहारं, शास्त्रदृष्ट्या चरन्ति च ।
न कुर्वन्ति कदा पापं, दयां कुर्वन्ति सर्वदा ॥३८१॥
मुक्तिकारणधर्माय, पापनिष्कन्दनाय च ।
अवतारः कृतोऽमीषां, मया देवि ! युगे युगे ॥३८२॥
यदमीषां महर्षीणां, जलदानादपि प्रिये ! ।
सुकृतं प्राप्यते लोकै-र्न हि तद् यज्ञकोटिभिः ॥३८३॥

नगरपुराणेऽप्युक्तम्—
दशभिर्भोजितैर्विप्रै-र्यत्फलं जायते कृते ।
मुनेरर्हद्भक्तस्य, तत्फलं जायते कलौ ॥३८४॥

विष्णुपुराणे—रजस्वला न दूष्येत, या च नारी तपस्विनी ।
कुमारी वेदिमारूढा, ब्राह्मणी चाथ दीक्षिता॥२८५॥

मनुस्मृतौ—कुलादिबीजं सर्वेषां, प्रथमो विमलवाहनः ।
चक्षुष्मान् यशस्वी चाभिचन्द्रश्च प्रसेनजित् ॥२८६॥

मरुदेवश्च नाभिश्च, भरते कुलसत्तमाः ।
अष्टमो मरुदेव्यां तु, नाभेर्जात उरुक्रमः ॥२८७॥

दर्शयन् वर्त्म वीराणां, सुरासुरनमस्कृतः ।
नीतित्रयस्य कर्ता यो, युगादौ प्रथमो जिनः ॥२८८॥

इदं नगरपुराणे भवावतारहस्ये दशमसहस्रे चतुर्दशशते उक्तम्—
स्पृष्ट्वा शत्रुञ्जयं तीर्थं, नत्वा रैवतकाचलम् ।
स्नात्वा गजपदे कुण्डे, पुनर्जन्म न विद्यते ॥२८९॥

अकारादि हकारान्तं, उर्ध्वाधोरेफसंयुतम् ।
नादबिन्दुकलाक्रान्तं, चन्द्रमण्डलसन्निभम् ॥२९०॥

एतद्देवि ! परं तत्त्वं, यो विजानाति तत्त्वतः ।
संसारबन्धनं छित्वा, स गच्छेत् परमां गतिम् ॥२९१॥

शिवेन गौर्या अग्रे उक्तं । श्रीभागवते पुष्पदन्तगणेन महिम्नः स्तवे द्वात्रिंशत्काव्यमित्ते दर्शनस्तुतिरिति, यथा—
ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं,
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।
समस्तेऽप्येतस्मिन् पुरमथन ! तैर्विस्मित इव,
स्तुवन् पश्यन् जिह्मन् (जिह्रेमि त्वां) न खलु ननु दृष्टा मुखरता ॥२९४

पञ्चाशदादौ किल मूलभूमे-र्दशोर्ध्वभूमेरपि विस्तरोऽस्य ।
उच्चत्वमष्टैव च योजनानि, मानं वदन्तीह जिनेश्वराद्रेः ॥२९५॥

इदं नगरपुराणे—
नाभेः सुतः स वृषभो मरुदेविसूनु-र्यो वै चचार समदृक् मुनियोगचर्याम् ।
तस्यार्हतत्वमृषयः पदमामनन्ति,
स्वस्थाः समाहितधियो जगतां हिताय ॥२९६॥

भागवते—तथा च ब्रह्मणः पुत्रः, सूत्रधारोऽपराजितः ।
तेनास्ति विहितं शास्त्र-मपराजितसञ्ज्ञितम् ॥३९७॥
प्रासादस्थापनं तत्र, गृहस्थापनमेव च ।
मूर्तीनां घटनं चैव, सर्वमस्ति यथाविधि ॥३९८॥
'सुमेरुशिखरं दृष्ट्वा' इत्यादि। द्वात्रिंशत्प्रमितैःश्लोकैस्माऽपृच्छत् महेशनु।
तत्रेशेन स्वयं प्रोक्ता, देव्यै ह्याराधना जिने ॥३९९॥
कथमिव जैनमुनीनां, दर्शनमपशकुनहेतवे मूढाः।
मन्यन्ते सर्वेष्वपि, भव्यं शास्त्रेषु प्रोक्तमपि ॥४१०॥
तथाच भारते—कृष्णवाक्यमर्जुनं प्रति—
आरोहस्व रथं पार्थ!, गाण्डीवं च करे कुरु।
निर्जितां मेदिनीं मन्ये, निर्ग्रन्थो यदि सन्मुखः ॥४०१॥
तत्रैव—पद्मिनी राजहंसाश्च, निर्ग्रन्थाश्च तपोधनाः।
यं देशमुपसर्पन्ति, तत्र देशे शिवं भवेत् ॥४०२॥
तथा च शकुनसारे—
दर्शनं श्वेतभिक्षूणां, सर्वोत्तमफलप्रदम्।
किं पुनः सूरिसंयुक्तं, राजयोगोऽयमुत्तमः ॥४०३॥
उक्तं च वसन्तराजे—
वमन् विकेशा हतमानगर्वाच्छिन्नाङ्गनग्नां त्यज तैलदिग्धाः।
रजस्वला गर्भवती रुगार्त्ता, मलान्वितोन्मत्तजटावृताश्च ॥४०४॥
दीनद्विपत् कृष्णविमुक्तकेशाः, कर्मेलकस्याः खरसैरिभस्थाः।
संन्यासिमाक्रन्दनपुंसकाद्याः, दुःखावहाः सर्वममीहितेषु ॥४०५॥
क्षुत्क्षामकुक्षिः स्नातो वा, तिलकैश्चित्रितोऽथवा।
मुक्तकेशो मेदग्धो, ब्राह्मणोपि निरीक्षितः ॥४०६॥
विकेशानिति चेद् ब्रूय, स्नातकास्तद्बहिस्थिताः।
तथा कार्पटिकाः सर्वे, पुनस्तीर्थेषु मुण्डिताः ॥४०७॥

साङ्ख्यदर्शनिनः सर्वे, बौद्धाः सर्वे तथैव च।
योगिनोऽपि विकेशाः स्युर्व्रतिभिः किं विनाशितम् ? ॥४०८॥
ब्राह्मणोपि हि निर्वाप-करो वाऽऽक्तभोजनः।
वेदं गणन् शुभस्त्वेषां, विपरीतोऽशुभो मतः ॥४०९॥
पाणिग्रहणे कन्यायाः, सुमहत् श्रूयते फलम्।
तस्यास्तु वित्तग्रहणात् पातकस्य परम्परा ॥४१०॥
भारतवाक्ये—
ग्रामे वसति पण्मासान्, स्वसुतां चोपजीवति।
एकाकी मिष्टमश्नाति, तस्यार्थोऽनुमतो गतः ॥४११॥
सदा कृतं मूलकभक्षणं तैर्वित्तेन दत्ता स्वसुता नरैस्तैः।
छेदः कृतो वैष्णवपादपानां, नैदा कृता यैर्दशमी विमिश्रा ॥४१२॥
एकादशीमाहात्म्ये—
कथयन्ति सुखे ग्राह्यं, केचिद् गृह्णन्ति तत्सदा।
निर्वाहे सत्यपि क्वापि, तद् ग्राह्यं तैः कथं श्रुतम् ? ॥४१३॥
एकत्र ब्रह्मचर्यस्य, पालनं स्खलनं तथा।
अपरत्रोभयोर्मध्यात्, किमङ्गीक्रियतां बुधैः ? ॥४१४॥
व्यासोक्तौ— एकरात्रोषितस्यापि, या गतिर्ब्रह्मचारिणः।
न सा क्रतुसहस्रेण, वक्तुं शक्या युधिष्ठिर ! ॥४१५॥
भागवते च—कामादुपागतां गच्छेदगम्यामपि योषितम्।
जितेन्द्रियोऽपि तां त्यक्त्वा, युज्यते स्त्रीवधेन सः ॥४१६॥
कामार्त्तां स्वयमायातां, न भुङ्क्ते यो नितम्बिनीम्।
सोऽवश्यं नरकं याति, तन्निःश्वासहतो नरः ॥४१७॥
सदैव येन कार्यं स्यात्, स चाशुद्धोपि शुद्धिमान्।
त्यज्यतेऽग्निर्न दुष्टोपि, नारी त्वन्यरतापि च ॥४१८॥
यत उक्तम्—द्वावेतावशुचीभूतौ, दम्पती सुरतस्थितौ।
शयनादुत्थिता नारी, पुमान् स्नानेन शुद्ध्यति ॥४१९॥

साङ्ख्यदर्शनिनः सर्वे, बौद्धाः सर्वे तथैव च ।
योगिनोऽपि विकेशाः स्युर्व्रतिभिः किं विनाशितम् ? ॥४०८॥
ब्राह्मणोपि हि निर्वाप-करो याऽकृतभोजनः ।
वेदं गमन् शुभस्त्वेषां, विपरीतोऽशुभो मतः ॥४०९॥
पाणिग्रहणे कन्यायाः, सुमहत् श्रूयते फलम् ।
तस्यास्तु वित्तग्रहणात् पातकस्य परम्परा ॥४१०॥
भारतवाक्ये—
ग्रामे वसति षण्मासान्, स्वसुतां चोपजीवति ।
एकाकी मिष्टमश्नाति, तस्यार्योऽनुमतो मतः ॥४११॥
सदा कृतं मूलकभक्षणं तैर्वित्तेन दत्ता स्वसुता नरैस्तैः ।
छेदः कृतो वैष्णवपादपानां, नैव कृता यैर्दशमी विमिश्रा ॥४१२॥
एकादशीमाहात्म्ये—
कथयन्ति मुखे ग्राह्यं, केचिद् गृह्णन्ति तत्सदा ।
निर्वाहे सत्यपि क्वापि, तद् ग्राह्यं तैः कथं श्रुतम् ? ॥४१३॥
एकत्र ब्रह्मचर्यस्य, पालनं स्खलनं तथा ।
अपरत्रोभयोर्मध्यात्, किमङ्गीक्रियतां जनैः ? ॥४१४॥
व्यासोक्तौ—एकरात्रोषितस्यापि, या गतिर्ब्रह्मचारिणः ।
न सा क्रतुसहस्रेण, वक्तुं शक्या युधिष्ठिर ! ॥४१५॥
भागवते च—कामादुपागतां गच्छेदगम्यामपि योषितम् ।
जितेन्द्रियोऽपि तां त्यक्त्वा, युज्यते स्त्रीवधेन सः ॥४१६॥
कामार्तां स्वयमायातां, न भुङ्क्ते यो नितम्बिनीम् ।
सोऽवश्यं नरकं याति, तन्निःश्वासहतो नरः ॥४१७॥
सदैव येन कार्यं स्यात्, न चाशुद्धोपि शुद्धिमान् ।
त्यज्यतेऽग्निर्न दुष्टोपि, नारी त्वन्यरतापि च ॥४१८॥
यत उक्तम्—द्वावेतावशुचीभूतौ, दम्पती सुरतस्थितौ ।
शयनादुत्थिता नारी, पुमान् स्नानेन शुद्ध्यति ॥४१९॥

तथा च यजुर्वेदे शतपथे रहस्यग्रन्थे उक्तं—
"इदं भो सुभगे ! भगं ते मधुसर्पिषा लिप्यते लिहामि प्रजापतेर्मुख-मेतद्द्वितीयम्" ॥

यतः स्मृतौ—न स्त्री दुष्यति जारेण, नाग्निर्दहनकर्मणा ।
नापो मूत्रपुरीषाभ्यां, न विप्रो वेदकर्मणा ॥४२०॥

*स्वयं विप्रतिपन्ना वा, यदि वा विप्रवादिनी ।
न त्याज्या दूषिता नारी, नास्यास्त्यागो विधीयते ॥४२१॥

स्त्रियो हि द्रव्यमतुलं, नैता दुष्यन्ति कर्हिचित् ।
तथा च—अष्टवर्षा भवेद् गौरी, नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या, तत ऊर्ध्वं रजस्वला ॥४२२॥

सोमस्त्वासां ददौ शौचं, गन्धर्वो ललितां गिरम् ।
पावकः सर्वमेध्यत्वं, तस्मान्निःकिल्बिषाः स्त्रियः ॥४२३॥

मासि मासि रजो यासां, दुष्कृतान्यपकर्षति । एवं वर्ण्यते, पुनर्गीतायाम्—
उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ? ॥४२४॥

वर्ण्यते कार्यतो नारी, पुनरन्यत्र दूष्यते ।
अमूर्तं केनचिद् दृष्टं, विषमन्येन केनचित् ॥४२५॥

माघमासे प्रयागे यो, गत्वा स्नाति दिनत्रयम् ।
तिलाहारेण तिष्ठेच, स्वर्गस्तस्य करे स्थितः ॥४२६॥

कदाचिद् दैवयोगेन, माघस्नानं न जायते ।
तदा तिलैर्मुखे क्षिप्तैः, स्नानतोऽप्यधिकं फलम् ॥४२७॥

कदाचिन्नृपतिः पापघटं विप्रेषु यच्छति ।
पवित्रेषु तदा पापं, तिलेषु कथमागतम् ? ॥४२८॥

---

* 'बलात्कारी प्रभुक्ता वा, चौरभुक्ता तथापि वा । न त्याज्या दूषिता नारी न कामोऽस्या विधीयते' अत्रिस्मृतौ १८३–८४ इत्यधिकम् प्रत्यन्तरे

तिलानां विक्रये पापं, तैलिकस्य च दर्शनात् ।
पूतास्ते स्वपवित्रा वा, विमर्शन्मुह्यते मनः ॥४२९॥
न गयायां न गङ्गायां, स्नानदानैस्तु शुद्धयति ।
हृदयं चेदशुद्धं स्यात्, तदा सर्वं निरर्थकम् ॥४३०॥
न स्नानैर्माघमासस्य, न गयापिण्डपातनैः ।
न तीर्थभ्रमणैः शुद्धि-र्नीरागस्य गृहेपि या ॥४३१॥
यत उक्तं हरिभद्रसूरिपादैः—
यच्चिन्त्यमानं न ददाति युक्तिं, प्रत्यक्षतो नाप्यनुमानतश्च ।
तद्बुद्धिमान् कोऽनु भजेत लोके, गोश्रृङ्गतः क्षीरसमुद्भवो न ॥४३२॥
हठो हठे यद्वदभिप्लुतः स्यान्नौर्नौविबद्धा च यथा समुद्रे ।
तथा परप्रत्ययमात्रदक्षो, लोकः प्रमादाम्भसि बम्भ्रमीति॥४३३॥
यत—गतानुगतिको लोको, न लोकः पारमार्थिकः ।
पश्य ब्राह्मणमूर्खेण, हारितं ताम्रभाजनम् ॥४३४॥
तथा च—मातृमोदकवद् बाला, ये गृह्णन्त्यविचारितम् ।
ते पश्चात्परितप्यन्ते, सुवर्णग्राहको यथा ॥४३५॥
नेत्रैर्निरीक्ष्य विषकण्टककीटसर्पान्,
सम्यग् यथा व्रजति तान् परिहृत्य सर्वान् ।
कुज्ञानकुश्रुतिकुमार्गकुदृष्टिदोषान्,
ज्ञात्वा विचारयत कोऽत्र परापवादः ? ॥४३६॥
यत उक्तं श्रीउमास्वातिवाचकैः—
आग्रही बत निनीषति युक्तिं, यत्र तत्र मतिरस्य निविष्टा ।
पक्षपातरहितस्य तु युक्ति-र्यत्र तत्र मतिरेति निवेशम् ॥४३७॥
युक्तायुक्तमिदं वाक्य-मवलोक्येह धीधनैः ।
मुक्त्वा कदाग्रहं तत्त्वे, जिनोक्ते क्रियतां मनः ॥४३८॥
यो रागरोषप्रमुखानरातीन्, जित्वा स्वयं मुक्तिपथं प्रपन्नः ।
स एव संसारसमुद्रमग्ना-नुद्धर्तुमीष्टे न परः कदाचित् ॥४३९॥

श्रीवृद्धगच्छाम्बरपूर्णचन्द्रः, श्रीदेवसूरिः सुगुरुर्बभूव ।
काष्ठाम्बरं यः कुमुदं विजित्य, श्रीसिद्धराजे स्ववशं वितेने ॥४४०॥
तस्यान्वये यश्च बभूव साक्षात्, सरस्वतीति प्रथितः पृथिव्याम् ।
सूरीश्वरः श्रीजयमङ्गलाख्यस्तच्छिष्यवर्योऽमरचन्द्रसूरिः ॥४४१॥
श्रीधर्मघोषसूरिस्तत्पट्टे सुरगुरोः समप्रतिभः ।
यः कुम्भयोनिमुनिरिव, शास्त्रार्णवमापपावचिरात् ॥४४२॥
श्रीधर्मतिलकसूरिस्तत्पुर्त्तनिकरशासाऽस्ति ।
विहितस्तेन परेषां, सन्देहसमुच्चयो ग्रन्थः ॥४४३॥
श्रीसूरिभिः प्रसादं विधाय संशोधनीय एषतराम् ।
यस्माज्जैनमुनीनामुपयोगस्त्वत्र बहुलोऽस्ति ॥४४४॥
मेरुर्महीधरो यावद्यावच्चन्द्रदिवाकरौ ।
तावद्विजयतामेष, वाच्यमानो विचक्षणैः ॥४४५॥

इति सन्देहसमुच्चयः

# श्रीसिद्धगिरिमहिमा।

सिद्धाद्रावत्र पूज्यः स्या-त्संयमी लिङ्गवानपि ।
इत्यनूचानवचना-च्छाद्धा अर्चन्ति लिङ्गिनम् ॥१॥
शिक्षयतश्च तद्वाक्यं, मुग्धतेऽविदितागमाः ।
द्रव्याधिकरणत्यागा त्, स्वीकृताव्रिवशवद्दमाः ॥२॥
नैवेमे मान्ते लिङ्गं, संयमं वाऽतिमद्दकाः ।
आत्मकल्याणबुद्धचैव, तेऽधिगच्छन्ति दारुणम् ॥३॥
त्रियेनयन्ति नैतत्ते, बज्रलेपाय तेऽशुभं ।
तीर्थस्थाने कृतं यद्दुष्कृतं मायाब्धितारकम् ॥४॥
न च मिथ्यात्वनिचित-मंहो याति तयाकृते ।
नासृगार्द्रं क्वचिद्वस्त्रं, मृष्टं तेनैव शुध्यति ॥५॥
न च द्रव्याधिकरण-दानेन भवपारगः ।
यतिभ्यो भोजनाद्येन, शस्तं दानं शुभात्मनाम् ॥६॥
न च ते संयमाधार-आर्त्तध्यानादिकृद्यतः ।
न चैतादृग्मवंद्दानं, तल्लक्षणबहिष्कृतम् ॥७॥
भूम्यादिदानवद्धेय-मेतद्दानं हितैषिणा ।
शास्त्राद्दतेन कल्याणं, नोक्तं शास्त्रे क्वचिच्च तत् ॥८॥

आगमोद्धारक (२०२)